श्री आत्मकमल–जैनलायब्रेरी ग्रन्थांक ६ ठो.

तपगच्छनायक–श्रीमन्मुनिसुन्दरसूरीश्वर शिष्यश्रीशुभशीलगणिसङ्कलिता

# पुण्यधननृपकथा ॥

संशोधक–मुनिश्रीशंकरविजयजी.

न्यायाम्भोनिधिश्रीमद्विजयानंदसूरीशपट्टपूर्वाचलभानुश्रीमद्विजयकमलसूरीमहाराजना उपदेशथी
पाटणनिवासि शेठ नगीनदास कर्मचंदनी द्रव्यसाहायवडे
प्रकाशिका–श्री महावीर जैनसभाना प्रमुख शेठ नानजीभाइ पोपटचंद–खंभात।
घीकांटावाडी–राजनगरे (अमदावाद)–श्री "जैन एडवोकेट" मुद्रणालये शा. गोकुलदासपुत्रचमनलालेन मुद्रितम्।
वीर संवत् २४४५. आत्म संवत् २४. विक्रम संवत् १९७५.

# अनुक्रमणिका.




| पत्रांक. | कथा. |
|---|---|
| १ | मंगलाचरण अने पुण्यधन कथा. |
| १ | धर्माधर्मोपरि धर्मबुद्धिपापबुद्धि कथा. |
| ५ | संघभक्ति तथा पूजनविषये भद्रंकरनृप कथा. |
| ८ | कुसंसर्गविषये धनभूपति कथा. |
| १२ | असत्यत्यागे जिष्णुकुमार कथा. |
| १४ | कृपणताविषये रत्नाकरश्रेष्ठि कथा. |
| १६ | पूज्यपूजाविषये धनश्रेष्ठि कथा. |
| १८ | दयाविषये हीरभूपाल कथा. |

| पत्रांक. | कथा. |
|---|---|
| १९ | दानविषये युधिष्ठिरभीम कथा. |
| २० | यात्राविषये धीरभूपति कथा. |
| २२ | नमस्कार प्रभावउपर वररूचि कथा. |
| २३ | तपविषये शंखदत्त कथा. |
| २५ | श्रुत आराधनविषये धीरकुमार कथा. |
| २६ | परोपकारे पुलिन्द्रक कथा. |
| २७ | समकितउपर सोमभूपति कथा. |




॥ अर्हम् ॥

अनुयोगाचार्य–श्रीमद्–दानविजयगणिगुरुभ्यो नमः ।



## प्रस्तावना.

आ ग्रन्थ देखतां सर्वनुं मन ग्रंथकार कोण हशे ? क्यारे थया हशे ? ते जाणवा उत्कंठा थाय ते स्वाभाविक छे–अतः–सामान्य परिचय करावको योग्य धारी कांईक उल्लेख करवामें आवे तो ते अस्थाने नही गणाय–तपागच्छाचार्य श्रीसोमसुन्दरसूरीश्वरनी पाटे श्रीमान् मुनिसुन्दरसूरी थया. तेमना शिष्य पं. श्रीशुभशीलगणिए आ ग्रंथनी रचना करी छे. आ महात्माए पंचशतिप्रबोध, भोजप्रबन्ध, उणादिनाममाला, शालिवाहनचरित्र, भरतेश्वरबाहुबलिवृत्ति, शीलवती कथा, स्नात्रपंचाशिका विगेरे अनेक ग्रन्थो बनाव्या छे। आ ग्रन्थ तेओश्रीए १४९६ में बनाव्यो छे एम एकप्रतिना अंतिमश्लोकथी सिद्ध थाय छे.

आ ग्रन्थमें श्रीजिनेन्द्र पूजा करनार केवीरिते जन्ममरणनां दुःखथी विमुक्त थाय छे ते उपर श्रीपुण्यधननृपतिनुं चरित्र आपवामें आव्युं छे, पुण्यधन राजाए स्फाटिक रत्नमय जिनालय बंधावी प्रथम तीर्थंकर श्रीऋषभदेव भगवान्नी मणिमय मूर्तिनी, अनेक नगरोमें कुंकुमपत्रिकाओ मोकली श्रीसंघ बोलावी मोटा उत्सवपूर्वक श्रीयशोभद्रसूरिजी पासे प्रतिष्ठा करावी, अने दररोज अष्टप्रकारी पूजा करता हता। एक दिन पूजा करतां शुभभावनामें चढतां केवलज्ञान प्राप्त कर्युं, मुनिवेष लई पृथ्वीउपर विचरी अनेक भव्यजीवोने प्रति-

बोधी शेष चार कर्मक्षय करी जन्ममरण रहित मोक्ष सुख प्राप्त कर्युं, विगेरे बहुज बोधप्रदवर्णन करवामें आव्युं छे।

आ ग्रन्थनी प्रेसकोपी प्रवर्तक श्रीकान्तिविजयजीमहाराजना शिष्य श्रीचतुरविजयजी महाराज पासेथी प्राप्त थइ हती अने संशोधन श्रीमान् हंसविजयजीमहाराजनी १ प्रति, अने एक खंभात जैनशालानी जुनी तेम अशुद्ध, अने एक पूज्य गुरुजी महाराज पासेथी, एम त्रण प्रतोना आधारे कर्युं छे. प्रुफ तपासवामें श्रीमान् मंगलविजयजी महाराजे सहाय करी छे. तेमनो तथा उपर्युक्त पुस्तको मोकलनार महाशयोनो उपगार मानी आ लघु प्रस्तावना पूर्ण करवामें आवे छे.

दृष्टिदोष, प्रेसदोषादिकथी अशुद्धि थवा पामी होय तो विद्वद्मुनिगण सुधारी वांचशो–एम प्रार्थी–

वीर संवत् २४४५ भादरवा सुद ५ शनिवार.
मुकाम बदनावर–( मालवा ).

मुनि–शंकरविजय.



|| अर्हम् ||

|| पं० श्रीमद्दानविजयगणिगुरुभ्यो नमः ||

पण्डित–श्रीशुभशीलगणिविरचिता

# पुण्यधनकथा ।

अर्हद्धर्मतरोः फलानि सुकुले, जन्माऽनघं जीवितम्, सच्छ्रीबुद्धिबले प्रतापयशसी, सौभाग्यमारोग्यता । क्ष्माभृत्केशवचक्रिशक्रमशभृत्प्रद्योतनानां पदम्, सार्वश्रीगणभृत्पदं शिवरमा सल्लभ्यो देहिनाम् ॥ १ ॥ करोति पुष्पैर्जिननायकस्य, पूजां त्रिकालं तनुमान् सदा यः । तस्यामरेशावनिनाथचक्रवर्त्यादिलक्ष्मीर्वशागा भवेद् द्राग् ॥ २ ॥ त्रिसन्ध्यं जिननाथस्य, पूजां कुर्वन्नरोऽनिशम् । लभन्ते शिवसौख्यानि, पुण्यधन इवाचिरात् ॥ ३ ॥ तथाहि—आसीद्भद्रपुरी द्वेधा, पुरन्दरपुरीनिभा । धर्मकर्मपरश्राद्धसौधसन्ततिशालिनी ॥ ४ ॥ तत्र भद्रङ्करो राजा, राजनीतिविराजितः । तस्य राज्ञी लसच्छीला शीलमालाऽभिधाऽभवत् ॥५॥ यतः—"वाणी रसवती यस्य, भार्या गुणवती सती । लक्ष्मीर्दानवती यस्य, सफलं तस्य जीवितम् ॥१॥" शीलमालाऽन्यदा सुप्ता, निशीथिन्यां निराकुला । स्वप्नेऽपश्यद्वदं पूर्णं, पुष्पमालामनोहरम् ॥ ६ ॥ उत्थाय तत्क्षणादेव, भद्रङ्करमहीभुजे । कथयामास तं स्वप्नस्वरूपं विनयान्विता ॥ ७ ॥ स्वप्नविज्ञः प्रगे स्वप्नफलमाकर्ण्य तत्क्षणात् । भद्रङ्करोऽवनीपालः, प्रोवाचेति प्रियां प्रति ॥ ८ ॥ औदार्यधैर्यगाम्भीर्य–विनयादिगुणान्वितः । भविष्यति प्रिये ! पुत्रः,

शीलमालोरुकासारे-ऽवततार मरालवत् ॥१०॥ गर्भानुभावतो
प्रियः स्वर्गसदामपि ॥ ९ ॥ च्युत्वा सुरालयात्कश्चि-ज्जीवः पीवरपुण्यवान् । शीलमालोरुकासारे-ऽवततार मरालवत् ॥१०॥ गर्भानुभावतो
ये ये, बभूवुर्दोहृदा वराः । ते ते भूमीभुजा पूर्णीचक्रिरे निखिलास्तदा ॥ ११ ॥ सम्पूर्णे दिवसे शील-मालाऽसूत सुतं वरम् । पूर्वेव तरणिं
दीप्रं, सरसीव सरोरुहम् ॥ १२ ॥ संतोष्य स्वजनं सर्वं, वस्त्रालंकृतिभिस्तदा । ददौ पुण्यधनाह्वेति, नन्दनाय महीपतिः ॥ १३ ॥ पुत्रः
पुण्यधनः पित्रोः, पाठ्यमानः प्रयत्नतः । पण्डितान्ते बभुवांशु, सर्वशास्त्रविशारदः ॥ १४ ॥ यतः—"आहारनिद्राभयमैथुनानि, सामान्यमे-
तत्पशुभिर्नराणाम् । ज्ञानं विशेषः खलु मानुषाणां, ज्ञानेन हीनाः पशवो मनुष्याः ॥ १ ॥" अन्यदा तत्पुरोद्याने, समाकर्ण्यागतान् गु-
रून् । धर्मघोषाभिधान् नन्तुं, ययौ पुत्रप्रियान्वितः ॥१५॥ प्रणम्य विधिवद् भूपो, धर्मं श्रोतुमनास्तदा । उपविष्टोऽग्रतः सूरि-पादानामाद-
रात् स्फुटम् ॥ १६ ॥ तथाहि—लभन्ते धर्मतः सौख्यं, धर्मबुद्धिरिवाङ्गिनः । लभन्ते पापतो दुःखं, पापबुद्धिरिवाचिरात् ॥ १७ ॥ श्रीपुरे-
नगरेऽभूतां, मित्रौ द्वौ वणिजः सुतौ । धर्मबुद्धिरभूदाद्यो, द्वितीयः पापधीः पुनः ॥ १८ ॥ अल्पप्रयासतो धर्म-बुद्धेः स्याद्विभवार्जनम् ।
बहूपक्रमतः पाप-बुद्धेः स्यान्न धनं मनाग् ॥ १९ ॥ यतः—"धम्मेण कुलप्पसूई, धम्मेण य दिव्वरूवसम्पत्ती । धम्मेण धणसमिद्धी, धम्मेण
सुवित्थडा कित्ती ॥ १ ॥ धम्मेण धणं विउलं, आउं दीहं सुहं च सोहग्गं। दारिद्दं दोहग्गं, अकालमरणं अहम्मेण ॥२॥" एकदा चिन्तितं
पाप-बुद्धिनेति स्वचेतसि । दरिद्रवानहं मूर्खो, निर्बुद्धिर्भाग्यवर्जितः ॥ २० ॥ धर्मबुद्धिर्धनी धीमान्, द्रव्योपार्जनपण्डितः । विद्यावांश्च सु-
सौभाग्यो, मान्यो भूमीभुजामपि ॥ २१ ॥ तदेनमग्रतः कृत्वा, धर्मबुद्धिं सुहृद्वरम् । गत्वा देशान्तरे द्रव्य-मर्जयिष्याम्यहं बहु ॥२२॥ पुनः
पश्चाद्वलन् मित्रं, वञ्चयित्वाऽखिलं धनम् । गृहीत्वाऽहं सुखी बाढं, भविष्यामीत्यचिन्तयत् ॥ २३ ॥ यतः—"दुर्जनानां च सर्पाणां, ख-
लानां च विशेषतः । मनोरथा न सिद्ध्यन्ति, तेनेदं वर्त्तते जगत् ॥ १ ॥ जामाता कृष्णसर्पश्च, दुर्जनः पावकस्तथा । उपकारैर्न गृह्यन्ते, प-

श्रमो भागिनेयकः ॥ २ ॥ दुज्जणजणतुम्बूलवण, जइ सिञ्चइ अमिएण । तोइज कण्टा फाटडा, जातिहिं तणइ गुणेण ॥३॥ " गोपयित्वाऽऽकृतिं प्राह, पापबुद्धिरथैकदा । धर्मबुद्धेऽधुना किञ्चि-त्क्रियते स्म धनार्जनम् ॥ २४ ॥ यतः—"यस्यार्थास्तस्य मित्राणि, यस्यार्थास्तस्य बान्धवाः । यस्यार्थाः स पुमान् लोके, यस्यार्थाः स च जीवति ॥ १ ॥ " अर्थार्थी जीवलोकोऽयं, श्मशानमपि सेवते । जनेतारमपि त्यक्त्वा, निःस्वो गच्छति दूरतः ॥२५॥ जीवन्तो मृतकाः पञ्च—श्रूयन्ते किल भारते । दरिद्रो व्याधितो मूर्खः, प्रवासी नित्यसेवकः ॥२६॥ इत्यादि वचनैरुत्सा—हितो धर्ममतिस्तदा । आत्तक्रयाणकस्तेन, युक्तोऽचालीत् कुबुद्धिना ॥ २७ ॥ यतः—"जणणी य जम्मभूमी, पच्छिमनिद्दा सुभासिआ गुट्ठी । मणइट्ठं माणुस्सं, पञ्चवि दुक्खेण मुञ्चन्ति ॥ १ ॥ " धर्मबुद्धिप्रभावेण, गत्वा देशान्तरं तदा । पापबुद्धिः प्रभूतं च द्रव्यमर्जितवान् क्षणात् ॥ २८ ॥ प्रभूतोपार्जितद्रव्यौ, द्वावेव सुहृदौ तदा । औत्सुक्येन जिगमिषू, चलितौ स्वगृहं प्रति ॥ २९ ॥ यतः—"प्राप्तविद्यार्थशिल्पानां, देशान्तरनिवासिनाम् । क्रोशमात्रोऽपि भूभागः, शतयोजनवद्भवेत् ॥ १ ॥ " पापबुद्धिश्चलन्मार्गे, प्राह धर्ममतिं प्रति । भो मित्र ! विभवः सर्वो, गृहे नेतुं न युज्यते ॥ ३० ॥ लोभवान् नृपतिर्बन्धु—जनाः केचिद्धनार्थिनः । प्रादुर्भूतं धनं तेन, गृह्यते न गृहे मनाग् ॥ ३१ ॥ यतः—" न वित्तं दर्शयेत्प्राज्ञः, कस्यचित्स्वल्पमप्यहो ! । मुनेरपि यतस्तस्य, दर्शनाच्चलते मनः ॥३२॥ यथाऽऽमिषं जले मत्स्यै—र्भक्ष्यते श्वापदैर्भुवि । आकाशे पक्षिभिश्चैव, तथा सर्वत्र वित्तवान् ॥३३॥ " धर्मबुद्धिरुवाचेति, मित्र ! सत्यं भवद्वचः । ततो भूरिधनं ताभ्यां, बहिर्न्यासीकृतं तदा ॥ ३४ ॥ आदायाथ धनं किञ्चि—त्सुहृदावागतौ गृहम् । धर्मबुद्धिः कुबुद्धिश्च, तिष्ठतः स्म सुखेन च ॥ ३५ ॥ गत्वैकदा निशीथिन्यां, तत्र पापमती रहः । लात्वाऽखिलं धनं गर्तां, पूरयित्वाऽगमद्गृहम् ॥ ३६ ॥ यतः—" अश्वप्लुतं दुर्जनचिन्तितं च स्त्रीणां चरित्रं भवितव्यता च । अवर्षणं चापि सुवर्षणं च, देवा न जानन्ति कुतो मनुष्याः? ॥ १ ॥ " अन्येद्युर्धर्मबुद्धिं च, प्राह

पापमतिः स्फुटम् । सीदामश्च धनाभावा–द्वयं भूरिकुटुम्बकाः ॥ ३७ ॥ तत्र गत्वा ततः स्थाना–त्किञ्चिदानीयते धनम् । धर्मबुद्धिरुवाचाथ, क्रियतां भो ! यथारुचि ॥ ३८ ॥ गत्वाऽथ तत्र तौ यावत्, खनतः स्थानमञ्जसा । रिक्तं भाण्डं समालोक्या–भूतामाकुलमानसौ ॥ ३९ ॥ यतः—" दायादाः स्पृहयन्ति तस्करगणा मुष्णन्ति भूमीभुजो, गृह्णन्ति छलमाकलय्य हुतभुग् भस्मीकरोति क्षणात् । अम्भः प्लावयते क्षितौ विनिहितं यक्षा हरन्ति हठाद्, दुर्वृत्तास्तनया नयन्ति निधनं धिग् बह्वधीनं धनम् ॥ १ ॥" प्राह पापमतिर्वक्ष–स्ताडयन् शिरसा सह । लुठन् भूमीतले केशाँ–स्त्रोटयन् करुणस्वरम् ॥ ४० ॥ धर्मबुद्धे ! त्वया द्रव्यं, हृतं नान्येन केनचित् । यतो भूयोऽत्र गर्तेयं, पूरिता तद्वदेव द्राग् ॥ ४१ ॥ तत्प्रयच्छ ममार्द्धाय, धर्मबुद्धेऽधुना धनम् । अहं निवेदयिष्याम्य–न्यथा राजकुलेऽचिरात् ॥४२॥ धर्मबुद्धिरुवाचेति, मैवं पापमते ! वद । यतः परधनाकाङ्क्षी, न भवेद्धर्मधीः कदा ॥ ४३ ॥ उक्तं च—" मातृवत्परदाराणि, परद्रव्याणि लोष्ठवत् । आत्मवत्सर्वभूतानि, वीक्ष्यन्ते धर्मबुद्धयः ॥ १ ॥" एवं विवदमानौ ता–वपि राजकुले गतौ । प्रोचतुर्मन्त्रिणामग्रे, दूषणानि परस्परम् ॥४४॥ अथाधिकारिभिर्याव–द्दिव्यार्थं योजितौ च तौ । प्राह पापमतिस्ताव–दिदं दिव्यं न युक्तिमत् ॥ ४५ ॥ यतः—"विवादेऽन्वेष्यते पत्रं, तदभावे च साक्षिणः । साक्ष्यभावे भवेद्दिव्यं, प्रवदन्ति मनीषिणः ॥ १ ॥" तदत्र विषये मेऽस्ति, साक्षिणी वनदेवता । कथयिष्यति सा स्पष्टं, चौरं द्रव्यापहारिणम् ॥ ४६ ॥ अथ तैर्मन्त्रिभिः प्रोक्तं, सत्यमेव भवद्वचः । नैव साक्षिणि सत्येव, लोकैर्दिव्यं विधीयते ॥ ४७ ॥ यतः—" अन्त्यजोऽपि यदा साक्षी, विवादे संप्रजायते । न तत्र विद्यते दिव्यं, किं पुनर्यत्र देवता ? ॥ १ ॥" तदस्माकं महच्चित्ते, कौतुकं वर्तते वणिग् ! । तेन वाक् श्रोष्यते तत्र, वनदेव्याः प्रगे पुनः ॥ ४८ ॥ गत्वा गेहं जगौ पापः, प्राञ्जलिर्जनकं प्रति, मया धर्ममतेर्द्रव्यं, वञ्चयित्वाऽखिलं लले ॥ ४९ ॥ प्रातर्वने समेष्यन्ति, सचिवाद्या जना घनाः । वृक्षस्य कोटरे तस्मात्, स्थित्वेदमुच्यतां वचः ॥ ५० ॥ श्रूयतां सकला लोकाः !,

सावधाना वचो मम। पापबुद्धेर्धनं सर्वं, धर्मबुद्धिर्लेलौ निशि ॥ ५१ ॥ पापबुद्धिपिता वृक्ष–कोटरे स्थितवान् वने। प्रगे पापमतिर्धर्म–मत्यादिसहितो ययौ ॥ ५२ ॥ बलिं कृत्वाऽवदन् सर्वे, इत्थं भो! वनदेवते!। येनात्तो विभवस्तस्याभिधां त्वं कथयाधुना ॥ ५३ ॥ एवं चाखिललोकेषु, प्रवदत्सु मुहुर्मुहुः। निस्ससाराऽरवः स्फारः, शमीपादपकोटरात् ॥ ५४ ॥ श्रूयतां सकला लोकाः!, सावधाना वचो मम। पापबुद्धेर्धनं सर्वं, धर्मबुद्धिर्लेलौ निशि ॥ ५५ ॥ धर्मधीश्चिन्तयामास, अहो! कपटवञ्चना। अहो! असारसंसार–स्वरूपं दुःखदं नृणाम् ॥५६॥ यतः—"अभ्रच्छाया तृणादग्निः, खले प्रीतिः स्थले जलम्। वेश्यारागः कुमित्रं च, षडेते बुद्बुदोपमाः ॥१॥" रासभारोहणं तस्या–दिष्टं यावच्च मन्त्रिभिः। तावद्धर्ममतिः प्राह, सचिवाग्रे इदं वचः ॥ ५७ ॥ आनीयाग्निमसौ वृक्षो, ज्वाल्यतां प्रथमं खलु। रासभारोहणादीनि, पश्चाच्च क्रियतां मम ॥ ५८ ॥ ततोऽविकारिभिर्दत्तो, यावन्महीरुहेऽनलः। स्फुटिताक्षोऽर्धदग्धाङ्गः, करुणं परिदेवयन् ॥ ५९ ॥ विकरालाकृतिर्वृक्ष–कोटरात्पापधीपिता। निश्चक्राम ततः पृष्टो, मन्त्रिभिर्जनसंयुतैः ॥६०॥ किमिदं कौतुकं किं वा, नाटकं कूटपेटकम्। पापबुद्धेः पिता प्राह, पापबुद्धिविचेष्टितम् ॥ ६१ ॥ उदित्वा चेष्टितं सर्वं, पापबुद्धेर्दुरात्मनः। दग्धदेहः क्षणात्प्राप, मृतिं पापमतेः पिता ॥ ६२ ॥ यतः—"अन्नहा परिचिंतिज्जइ, कज्जं परिणमइ अन्नहा चेव। विहिवसयाण जियाणं, खणंपि सुक्खं बहुयविग्घं ॥ १ ॥" मन्त्रिणश्च तरोस्तस्य, शाखायां पापपूरुषम्। प्रलंब्यैत्थं ततो धर्म–बुद्धिं तुष्टिविरे भृशम् ॥६३॥ धन्योऽसि त्वं पिता धन्यो, धन्या माताऽनघं कुलम्। ज्ञातिर्धन्या च वाग् धन्या, मतिर्धन्याऽमला तव ॥६४॥ पापधीचेष्टितं सर्वं, मत्वा निखिलमन्त्रिणः। भूपतेः पुरतः प्रोचुरेवं परस्परं तदा ॥६५॥ बकमूर्ख इवोपायं, धर्मधीवञ्चने व्यधात्। नापायं पापधीरेष, स्वस्मिंश्चिन्तितवान् मनाग् ॥ ६६ ॥ तथाहि—कस्मिंश्चित्कानने आसी–द्वकवान् पादपो महान्। उवास कोटरे तस्य, सर्पो दुष्टमनाः सदा ॥६७॥ बकापत्यानि सर्वाणि, खादति स्म भुजङ्गमः। तेन दुःखी बको गत्वा, सर–

स्यां रोदिति भृशम् ॥६८॥ तं वीक्ष्य मत्स्यराट् प्राह, किमु मामक ! रुद्यते ?। आलम्ब्य साहसं चेह, ब्रूहि त्वं दुःखकारणम् ॥ ६९ ॥ तेनोक्तं मन्दभाग्यस्य, ममापत्यानि नित्यशः । खादति स्म दुरात्माऽहि–स्तद्दुःखदुःखितोऽस्म्यहम् ॥७०॥ उपायो विद्यते तस्य, मारणे यदि किंचन।तदा ममाग्रतः शीघ्रं, कथ्यतां भोः कुलीरक ! ॥७१॥ कुलीरोऽचिन्तयच्चित्ते, सहजारिरियं मम । तत्तथा करवै सर्वा–ण्यपत्यान्यत्ति सर्पराट् ॥ ७२ ॥ यतः—"नवनीतसमां वाणीं, कृत्वा चित्तं सनिर्दयम् । तथा प्रबोध्यते शत्रुः, सध्येयो म्रियते यथा ॥ १ ॥" मत्स्यः प्रोवाच यद्येवं, मांसखण्डानि भूरिशः । विमुञ्च नकुलस्थानाद्, यावत्सर्पस्य कोटरम् ॥७३॥ येनैतद्वर्त्मना गत्वा, नकुलो दुष्टमानसः । दुरात्मानमहिं हन्ति, गरुत्मानिव हेलया ॥७४॥ तथैवानुष्ठिते मांस–खण्डानुगामिना तदा । नकुलेन निहत्याहिं, भक्षिताश्च बका अपि ॥७५॥ अनेन कुधिया तद्व–दुपायश्चिन्तितो हृदि। नापायश्चिन्तितो मौढ्या–द्बकमूर्ख इव स्वयम् ॥७६॥ पापबुद्धिस्ततो मृत्वा, स्याद्दुर्गतिमीयिवान्। धर्मधीश्चिन्तयामास, संसारासारतामिति ॥७७॥ यतः—"दुःखं स्त्रीकुक्षिमध्ये प्रथममिह भवे गर्भवासे नराणां, बालत्वे चापि दुःखं मलमलिनतनुः,स्त्रीपयःपानमिश्रम् । तारुण्ये चापि दुःखं भवति विरहजं,वृद्धभावेऽपि दुःखं, संसारे रे मनुष्याः ! वदत यदि सुखं स्वल्पमप्यस्ति किंचित् ॥ १ ॥" विमुच्य तृणवत्सर्वं, कुटुम्बं धर्मधीस्तदा। जग्राह सुगुरोः पार्श्वे, दीक्षां संसारतारिकाम् ॥ ७८ ॥ तपस्तप्त्वा गुरोःसेवां, कृत्वा भक्त्या निरन्तरम् । लात्वा चानशनं प्रान्ते, धर्मधीः स्वर्गमीयिवान् ॥ ७९ ॥ यतः—" एगदिवसंपि जीवो, पवज्जमुवागओ अनन्नमणो । जइवि न पावइ मुक्खं, अवस्स वेमाणिओ होइ ॥ १ ॥ " एवं भो भविकाः ! धर्मा–धर्मयोः फलमीदृशम् । आकर्ण्य कुरुतां धर्मं, स्वर्गादिसुखदायकम् ॥ ८० ॥ श्रुत्वेति धर्ममाहात्म्यं, भद्रंकरमहीपतिः। चकार श्रीजिनेन्द्रोक्त–धर्मे लीनं मनो निजम् ॥८१॥ विशेषतस्तदा धर्मं, शृण्वन् पुण्यधनोऽङ्गजः । भूरिशोऽभिग्रहान् भावा–ज्जग्राहामलमानसः ॥ ८२ ॥ त्रिसंध्यं जिननाथस्य, विना पूजां कदाचन ।

भोजनं नैव कुर्वेऽह–मित्यग्रह्लादभिग्रहम् ॥८३॥ स्तुत्वा नत्वा गुरून् भक्ति–भावाद्भद्रंकरो नृपः । पुत्रप्रियादिसंयुक्तो, निजावासं समीयिवान् ॥ ८४ ॥ अन्येद्युर्मेदिनीनाथे, समासीने सुसंसदि । आगत्य प्राञ्जलिः कश्चि–दिति जजल्प मानवः ॥८५॥ पद्मपुरं बलाद्दुष्टो, बलिष्ठः कर्णभूपतिः । लुंटयित्वाऽधुना हेम–पुरमुद्यत ईयिवान् ॥ ८६ ॥ श्रुत्वैतद् भूपतिः सद्यः, कोपारुणविलोचनः । हन्तुं वैरिबलं चक्रे, उद्यमं बलवान् बलात् ॥ ८७ ॥ संनह्य पृतनां याव–च्चचालावनीनायकः । तावत्पुण्यधनोऽभ्येत्य, व्यजिज्ञपन्महीपतिम् ॥८८॥ मयि सत्यङ्गजे तात !, किं ते वैरिजयोद्यमः ?। आदेशं देहि मे सद्यः, शत्रोर्बलनिकृन्तने ॥८९॥ ततो हृष्टो नृपोऽवादीत्, पुत्र! धन्योऽसि सांप्रतम्। यदित्थं वदसि द्वेषि–जयाय विनयान्वितः ॥ ९० ॥ यतः—"सर्वाङ्गसुन्दरः किं तु, ज्ञानवान् गुणनीरधिः । श्रीजिनेन्द्रपथाध्वन्यः, प्राप्यते पुण्यतः सुतः ॥ १ ॥ यैर्वृद्धिं नीयते धर्मो, बन्धुवर्गः कुलं यशः । पितुः पुत्रास्त एव स्युर्वैरिणः स्वैरिणः परे ॥२॥ पवित्रयन्ति जननी–मवनीमिव केचन । परसंताप–हर्तारश्चन्दना इव नन्दनाः ॥ ३ ॥ दीपाः स्थितं वस्तु विभासयन्ति, कुलप्रदीपास्तु पुनर्नवीनाः । चिरं व्यतीतानपि पूर्वजान् ये, प्रकाशयन्ति स्वगुणप्रकर्षतः ॥ ४ ॥ " आदेशं भूपतेः प्राप्या–चालीत्पुण्यधनस्तदा । हन्तुं वैरिबलं सद्यः, संनह्य निखिलं बलम् ॥ ९१ ॥ शोपयन् सरितः सर्वाः, स्थलीकुर्वन् समाः समाः । यावद्धेमपुरं याति, नृपः पुण्यधनोऽचिरात् ॥९२॥ तावद्धेमपुरं द्विड्भिर्वेष्टितं सर्वतो घनैः। समालोक्य वहिः पुण्य–धनस्तस्थौ बलान्वितः ॥९३॥ यतः—"बलवन्तं रिपुं दृष्ट्वा, किलात्मानं प्रगोपयेत्। बलवद्भिस्तु कर्तव्या, शरच्चन्द्रप्रकाशता ॥१॥" प्रातः सर्वं बलं लात्वा, नृपः पुण्यधनस्तदा। ढुढौके योद्धुमरिभि–र्रतिप्रोत्साहिताशयः॥९४॥ युध्यन्ते स्म तदा केऽपि, खड्गाखड्गि परस्परम्। दण्डादण्डी भटाः केऽपि, केऽपि तत्र शराशरि ॥९५॥ प्रस्तरैः केऽपि युद्ध्यन्ते, गोलकैः केऽपि भूरिभिः। मुष्टामुष्टि तदा केऽपि, केऽपि भल्लैरपि स्फुटम् ॥ ९६ ॥ युद्धं दिनद्वयं कृत्वा, वैरिभिर्भूरिशो भृशम् । भोजनं कर्तुकामोऽगात्, क्वचित्स्थाने नृपस्तदा ॥ ९७ ॥ विधिना विहितस्नान–कर्मा

स्यां रोदिति भृशम् ॥६८॥ तं वीक्ष्य मत्स्यराट् प्राह, किमु मामक ! रुद्यते ?। आलम्ब्य साहसं चेह, ब्रूहि त्वं दुःखकारणम् ॥ ६९ ॥ तेनोक्तं मन्दभाग्यस्य, ममापत्यानि नित्यशः । खादति स्म दुरात्माऽहि–स्तद्दुःखदुःखितोऽस्म्यहम् ॥७०॥ उपायो विद्यते तस्य, मारणे यदि किंचन। तदा ममाग्रतः शीघ्रं, कथ्यतां भोः कुलीरक ! ॥७१॥ कुलीरोऽचिन्तयच्चित्ते, सहजारिरियं मम । तत्तथा करवै सर्वा–ण्यपत्यान्यत्ति सर्पराट् ॥ ७२ ॥ यतः—"नवनीतसमां वाणीं, कृत्वा चित्तं सनिर्दयम् । तथा प्रबोध्यते शत्रुः, सध्येयो म्रियते यथा ॥ १ ॥" मत्स्यः प्रोवाच यद्येवं, मांसखण्डानि भूरिशः । विमुञ्च नकुलस्थानाद्, यावत्सर्पस्य कोटरम् ॥७३॥ येनैतद्वर्त्मना गत्वा, नकुलो दुष्टमानसः । दुरात्मानमहिं हन्ति, गरुत्मानिव हेलया ॥७४॥ तथैवानुष्ठिते मांस–खण्डानुगामिना तदा । नकुलेन निहत्याहिं, भक्षिताश्च बका अपि ॥७५॥ अनेन कुधिया तद्व–दुपायश्चिन्तितो हृदि । नापायश्चिन्तितो मौढ्या–द्वकमूर्ख इव स्वयम् ॥७६॥ पापबुद्धिस्ततो मृत्वा, रयाद्दुर्गतिमीयिवान्। धर्मधीश्चिन्तयामास, संसारासारतामिति ॥७७॥ यतः—"दुःखं स्त्रीकुक्षिमध्ये प्रथममिह भवे, गर्भवासे नराणां, बालत्वे चापि दुःखं मलमलिनतनुः,स्त्रीपयःपानमिश्रम् । तारुण्ये चापि दुःखं भवति विरहजं, वृद्धभावेऽपि दुःखं, संसारे रे मनुष्याः ! वदत यदि सुखं स्वल्पमप्यस्ति किंचित् ॥ १ ॥" विमुच्य तृणवत्सर्वं, कुटुम्बं धर्मधीस्तदा। जग्राह सुगुरोः पार्श्वे, दीक्षां संसारतारिकाम् ॥ ७८ ॥ तपस्तप्त्वा गुरोःसेवां, कृत्वा भक्त्या निरन्तरम् । लात्वा चानशनं प्रान्ते, धर्मधीः स्वर्गमीयिवान् ॥ ७९ ॥ यतः—" एगदिवसंपि जीवो, पव्वज्जमुवागओ अनन्नमणो । जइवि न पावइ मुक्खं, अवस्स वेमाणिओ होइ ॥ १ ॥ " एवं भो भविकाः ! धर्मा–धर्मयोः फलमीदृशम् । आकर्ण्य कुरुतां धर्मं, स्वर्गादिसुखदायकम् ॥ ८० ॥ श्रुत्वेति धर्ममाहात्म्यं, भद्रंकरमहीपतिः। चकार श्रीजिनेन्द्रोक्त–धर्मे लीनं मनो निजम् ॥८१॥ विशेषतस्तदा धर्मं, शृण्वन् पुण्यधनोऽङ्गजः । भूरिशोऽभिग्रहान् भावा–ज्जग्राहामलमानसः ॥ ८२ ॥ त्रिसंध्यं जिननाथस्य, विना पूजां कदाचन ।

भोजनं नैव कुर्वेऽह-मित्यगृह्णादभिग्रहम् ॥८३॥ स्तुत्वा नत्वा गुरून् भक्ति-भावार्द्रकरो नृपः । पुत्रप्रियादिसंयुक्तो, निजावासं समीयिवान् ॥
८४ ॥ अन्येद्युर्मेदिनीनाथे, समासीने सुसंसदि । आगत्य प्राञ्जलिः कश्चि-दिति जजल्प मानवः ॥८५॥ पद्मपुरं बलाद्दुष्टो, बलिष्ठः कर्ण-
भूपतिः । लुंटयित्वाऽधुना हेम-पुरमुद्यत ईयिवान् ॥ ८६ ॥ श्रुत्वैतद् भूपतिः सद्यः, कोपारुणविलोचनः । हन्तुं वैरिबलं चक्रे, उद्यमं बल-
वान् बलात् ॥ ८७ ॥ संनह्य पृतनां याव-च्चचालावनीनायकः । तावत्पुण्यधनोऽभ्येत्य, व्यजिज्ञपन्महीपतिम् ॥८८॥ मयि सत्यङ्गजे तात!,
किं ते वैरिजयोद्यमः ?। आदेशं देहि मे सद्यः, शत्रोर्बलनिकृन्तने ॥८९॥ ततो हृष्टो नृपोऽवादीत्, पुत्र! धन्योऽसि सांप्रतम्। यदित्थं वदसि
द्वेषि-जयाय विनयान्वितः ॥ ९० ॥ यतः—"सर्वाङ्गसुन्दरः किं तु, ज्ञानवान् गुणनीरधिः । श्रीजिनेन्द्रपथाध्वन्यः, प्राप्यते पुण्यतः सुतः ॥
१ ॥ यैर्वृद्धिं नीयते धर्मो, बन्धुवर्गः कुलं यशः । पितुः पुत्रास्त एव स्युर्वैरिणः स्वैरिणः परे ॥२॥ पवित्रयन्ति जननी-मवनीमिव केचन ।
परसंताप-हर्तारश्चन्दना इव नन्दनाः ॥ ३ ॥ दीपाः स्थितं वस्तु विभासयन्ति, कुलप्रदीपास्तु पुनर्नवीनाः । चिरं व्यतीतानपि पूर्वजान् ये,
प्रकाशयन्ति स्वगुणप्रकर्षतः ॥ ४ ॥" आदेशं भूपतेः प्राप्या-चालीत्पुण्यधनस्तदा । हन्तुं वैरिबलं सद्यः, संनह्य निखिलं बलम् ॥ ९१ ॥
शोषयन् सरितः सर्वाः, स्थलीकुर्वन् समाः समाः । यावद्धेमपुरं याति, नृपः पुण्यधनोऽचिरात् ॥९२॥ तावद्धेमपुरं द्विड्भिर्वेष्टितं सर्वतो घनैः। समा-
लोक्य बहिः पुण्य-धनस्तस्थौ बलान्वितः ॥९३॥ यतः—"बलवन्तं रिपुं दृष्ट्वा, किलात्मानं प्रगोपयेत्। बलवद्भिस्तु कर्तव्या, शरच्चन्द्रप्रकाशता ॥१॥"
प्रातः सर्वं बलं लात्वा, नृपः पुण्यधनस्तदा। ढुढौके योद्धुमरिभि-रतिप्रोत्साहिताशयः॥९४॥ युध्यन्ते स्म तदा केऽपि, खड्गाखड्गि परस्परम्। दण्डा-
दण्डी भटाः केऽपि, केऽपि तत्र शराशरि ॥९५॥ प्रस्तरैः केऽपि युद्ध्यन्ते, गोलकैः केऽपि भूरिभिः। मुष्टामुष्टि तदा केऽपि, केऽपि भल्लैरपि स्फुटम् ॥
९६ ॥ युद्धं दिनद्वयं कृत्वा, वैरिभिर्भूरिशो भृशम् । भोजनं कर्तुकामोऽगात्, क्वचित्स्थाने नृपस्तदा ॥ ९७ ॥ विधिना विहितस्नान-कर्मा

पुण्यधनो नृपः । पत्कुट्यां जिनेन्द्रार्चां, यावत्कर्तुमुपागमत् ॥९८॥ तावद्विज्ञापना चक्रे, सेवकैरिति भूभुजः । जिनेन्द्रप्रतिमा स्वामिन्! नानीताऽस्तीह संप्रति ॥ ९९ ॥ ततः पुण्यधनो वक्ति, जिनधर्मपरायणः । विनार्हदर्चनां कृत्वा, नाद्म्यहं जीवितात्यये ॥ १०० ॥ सेवका भूपतिं प्राहु—रेवं विनयपूर्वकम् । हृदि कृत्वा जिनेन्द्रार्चां, स्वामिन्! कुरुष्व भोजनम् ॥ १०१ ॥ ततः प्राहेत्यमुर्वीशो, धर्मिष्ठः सेवकान् प्रति । धर्मघोषगुरोः पार्श्वे, मयाऽयं नियमो लले ॥ १०२ ॥ प्राणात्ययेऽपि तेनाहं, करवै नैव भोजनम् । बहुधा सेवकैः पर्य—वसाय्योऽपि न जेमिवान् ॥१०३॥ यतः—"राज्यं यातु श्रियो यान्तु, यान्तु प्राणा अशाश्वताः । या मया स्वयमेवोक्ता, वाचा मा यातु शाश्वती ॥१॥" तृतीयदिवसस्तस्य, विना भोजनमीयिवान् । चतुर्थेऽह्नि प्रगे योद्धुं, डुढौके कटकद्वयम् ॥ १०४ ॥ कर्णस्य प्रबला सेना, भिन्ना नैव मनागपि । ततश्चिन्तितवान् पुण्य—धनभूपोऽनुमानसम् ॥१०५॥ किमहो ? मन्दभाग्येन, मयका पूर्वजन्मनि । नाराधितो जिनेन्द्रोक्तो, धर्मो जीवदयामयः ॥ १०६ ॥ किं वाऽर्जितानि पुण्यानि, पूर्वभवभवान्यपि । विलीनान्यधुना येन, भग्नं मम महद्बलम् ॥१०७ ॥ इत्थं चिन्तयतः पुण्यधनस्य तस्य साहसात् । साहाय्यं चक्रवान् भीमा—भिधो यक्षेश्वरस्तदा ॥ १०८ ॥ क्षणतस्तेन यक्षेण, बलिष्ठेन रणे तदा । वैरिणः पृतनाः सर्वा, भग्नःप्राया कृतास्तथा ॥ १०९ ॥ यतः—"वने रणे शत्रुजलाग्निमध्ये, महार्णवे पर्वतमस्तके वा । सुप्तं प्रमत्तं विषमस्थितं वा, रक्षन्ति पुण्यानि पुराकृतानि ॥१॥ यस्याशये तिष्ठति जीव—रक्षामूलं जिनोक्तः प्रवरो हि धर्मः । सुरासुरोर्वीपतियक्षरक्षो, भूतादयस्तस्य वशीभवन्ति ॥ २ ॥" ततः क्षणेन भूपालं, कर्णं क्षिप्त्वाऽथ पञ्जरे । पुरमध्ये समागत्य, तस्थौ राजगृहे स्फुटम् ॥ ११० ॥ कृत्वा स्थानं समानीय, पुष्पाणि प्रवराण्यथ । गत्वा जिनालये पूजां, चक्रवानर्हतो नृपः ॥ १११ ॥ उदारैः स्तवनैः स्तुत्वा, जिनेन्द्रं मेदिनीपतिः । गीतनृत्यादिकं सर्वं, चकार स्वयमादरात् ॥ ११२ ॥ विधाय भोजनं भूप—स्ततः स सपरिच्छदः । धर्ममयीं कथां कुर्वस्त—द्दिनं तत्र तस्थिवान् ॥११३॥ यतः—

" ब्राह्म्ये मुहूर्ते उत्तिष्ठेत् परमेष्ठिस्तुतिं पठन् । किं धर्मा किं कुलश्चास्मि, किं व्रतोऽस्मीति च स्मरन् ? ॥ १ ॥ शुचिपुष्पामिषस्तोत्रैर्देवमभ्यर्च्य वेश्मनि । प्रत्याख्यानं यथाशक्ति कृत्वा देवगृहं व्रजेत् ॥ २ ॥ प्रविश्य विधिना तत्र त्रिःप्रदक्षिणयेज्जिनम् । पुष्पादिभिस्तमभ्यर्च्य स्तवनैरुत्तमैः स्तुयात् ॥ ३ ॥ ततो गुरूणामभ्यर्णे प्रतिपत्तिपुरस्सरम् । विदधीत विशुद्धात्मा प्रत्याख्यानप्रकाशनम् ॥ ४ ॥ " कर्णारातिं समादाय क्रामन् भूवलयं क्रमात् । आगात्पुण्यधनो भद्रपुरीं मनुजनायकः ॥ ११४ ॥ विनयेन ततो नत्वा, भूपतिं भूपनन्दनः । मुमोच पादयोरग्रे पितुः कर्णमरिं तदा ॥ ११५ ॥ रञ्जितो नृपतिः पुत्रगुणौघैर्विनयादिभिः । पुत्रं प्रेम्णा समालिङ्ग्य, यथास्थानं न्यवीविशत् ॥ ११६ ॥ नतं कर्णनृपं सौवामाज्ञां ग्राहितवान्नृपः । विससर्ज ततस्तस्मै दत्वा राज्यं तदीयकम् ॥ ११७ ॥ पूजाप्रभावतः पुण्यधनस्याकारि संगरे । साहाय्यं किल यक्षेणेत्युक्तं पद्मैर्नृपान्तिके ॥ ११८ ॥ भद्रंकरस्तमाकर्ण्य पूजायाः फलमार्हतः । त्रिसंध्यं कुरुते स्मार्चामिष्टया रङ्गतो महैः ॥ ११९ ॥ यतः—" वरगंधधूवचुक्खक्खएहिं कुसुमेहिं पवरदीवेहिं । नेवज्जजलफलेहि अ जिणपूआ अट्ठहा भणिआ ॥ १ ॥ त्रिवर्गसंसाधनमन्तरेण पशोरिवायुर्विफलं नरस्य । तत्रापि धर्मं प्रवरं वदन्ति न तं विना यद्भवतोऽर्थकामौ ॥ २ ॥ " अन्येद्युर्नृपतिः शत्रुंजये प्रथमबोधिदम् । निनंसुर्भूरिशो लोकान् मेलयामास मोदतः ॥ १२० ॥ मुहूर्तेऽथ शुभे धर्मघोषसूरीश्वरैः समम् । चचाल भूपतिः शत्रुंजये नन्तुं जिनेश्वरम् ॥ १२१ ॥ पुरं प्रति प्रति ग्रामं जिनेन्द्राणां महीपतिः । स्नात्रपूजाध्वजारोपोत्सवादि कृतवांस्तदा ॥ १२२ ॥ स्यन्दनाश्वखुरोत्खातरजोभिश्छादयन् रविम् । सरःसिन्धुपयोराशीन् शोषयन् चलति स्म सः ॥ १२३ ॥ शत्रुंजयेऽवतीर्णे दृक्पथे संघान्वितो नृपः । चक्रे महोत्सवं स्नात्रपूजानृत्यादिभिर्भृशम् ॥ १२४ ॥ यतः—" काचिद्बालकवन्महीतलगता, मूलच्छिदा कारणं, द्रव्योपार्जनपुष्पिताऽपि विफला, काचिच्च जातिप्रभा । काचित् श्रीकदलीव भोगफलदा, सत्पुण्यबीजच्युता, सर्वाङ्गीणशुभा रसाललतिकासत्पुण्यबीजान्विता ॥ १ ॥ " पादलिप्तपुरं प्राप्तो भद्रंकरमही-

पतिः । चकार गीतनृत्यादि नाभेयस्य पुरस्तदा ॥ १२५ ॥ यतः—" दशाहि तीर्थन्ययदानभोगक्षयात्मिकाः स्युर्द्रविणे चतस्रः । श्रद्धालु-
भिस्तत्र चतुर्दशादौ स्वराः कृतार्थीक्रियतेऽत्र लोके ॥ १ ॥ " वस्त्रादि प्रददद्दानं ततोऽर्थिभ्यः पदे पदे । शत्रुंजयगिरेः शृङ्गमारुरोह मृगेन्द्र-
वत् ॥ १२६ ॥ दृष्ट्वा युगादिदेवस्य मूर्तिं पुण्यमयीं किल । करोति स्म स्तुतिं भक्तिगर्भामेवं महीधवः ॥ १२७ ॥ संसारसागरपतज्जनयान-
पात्र ! मोहान्धकारतरणे ! कनकाभगात्र ! । देवार्चितांह्रियुगनाभिनरेन्द्रपुत्र ! कुर्याः सुखं मम लसद्गुणराशिसत्र ! ॥ १२८ ॥ यां ते स्तुतिं
मुखशतैरपि देवदेवाचार्यो न वक्तुमखिलज्ञ ! मनाग् समर्थः । इत्यल्पबुद्धिरहमज्ञशिरोमणिस्तां, श्रीनाभिनन्दन ! कथं ननु वर्णयामि ॥ १२९ ॥
श्रीमन्नाभिमहीनाथसूनो ! प्रथमभूपते ! । आदिवाचंयमाधीश ! प्रथमार्हन् ! नमोऽस्तु ते ॥ १३० ॥ ये जनास्तव पादाब्जं प्रपश्यन्त्यरुणोदये ।
कटाक्षयति तान् मुक्तिमहेला हेलया प्रभो ! ॥ १३१ ॥ विलोकिते मुखाम्भोजे तावकीने जिनेशितः ! । एनोऽन्धकारनिचयं याति नृणां रवा-
विव ॥ १३२ ॥ अद्य मे सफलं जन्म ममाद्य सफलो दिनः । अद्य मे प्रवरे नेत्रे यद्दृष्टोऽसि भवान् प्रभो ! ॥ १३३ ॥ त्वं ब्रह्मा शंकरस्त्वं
चाऽच्युतस्त्वं चामराधिपः । त्वं माता त्वं पिता चैव बन्धुस्त्वं विश्ववत्सलः ॥ १३४ ॥ इति स्तुत्वा स्तवैर्भद्रंकरः स्नानं विधाय च । ससंघ
आगतः पूजां कर्तुं विस्तरतोऽर्हतः ॥ १३५ ॥ रूप्यस्वर्णमयैः कुम्भैः सुगन्धजलपूरितैः । स्नात्रं चक्रे जिनेशस्य वृषभस्यावनीपतिः ॥ १३६ ॥
केशरैश्चन्दनैरङ्गविलेपनमथार्हतः । विधाय प्रवरैः पुष्पैः पूजामुर्वीपतिर्व्यधात् ॥ १३७ ॥ आरात्रिकादिकार्याणि विधाय विधिना नृपः । ध्व-
जारोपं चकारोच्चैर्गीतनृत्यपुरस्सरम् ॥ १३८ ॥ पुनः कृत्वा स्तुतिं स्फारैः स्तोत्रैः प्रथममर्हतः । ससंघो देशनां श्रोतुं धर्मघोषमुपस्थितः ॥
१३९ ॥ धर्मघोषगुरुर्दत्त्वा धर्मलाभं महीभुजे । मृद्वीकामधुसध्रीच्योपदेशं प्रददौ गिरा ॥ १४० ॥ प्रासादप्रतिमा यात्रा प्रतिष्ठा च प्रभावना ।
अमार्योद्घोषणादीनि पुण्यानि गृहमेधिनाम् ॥ १४१ ॥ समहं जिनयात्रार्चाप्रासादप्रतिमा वराः । कुर्वन्ति कारयन्त्येव ये ते स्युः सुखभागिनः ॥

१४२ ॥ विधाय संघवात्सल्यं भक्तवस्त्रादिभिस्तदा । चकार संघपूजां च धर्मघोषगुरोर्नृपः ॥ १४३ ॥ आदिदेवं जिनं नत्वा स्तुत्वा स्तोत्रै-
रुदारधीः । उत्ततार गिरेर्भद्रंकरभूपो मृगेन्द्रवत् ॥ १४४ ॥ ततः क्रामन् महीपीठं भद्रंकरावनीपतिः । आरूढो रैवतं शैलं पूर्वाद्रिमिव भानुमान्
॥ १४५ ॥ नेमिनाथं जिनं नत्वा पूजयित्वा सविस्तरम् । नत्वा स्तुत्वा महीपाल उत्तीर्णो रैवताचलात् ॥ १४६ ॥ शत्रुंजयादितीर्थेषु सा-
ङ्गजो वररङ्गतः । यात्रां कृत्वा नृपः प्रौढामाँजगाम निजं पुरम् ॥ १४७ ॥ पदे पदे ददद्दानं नृत्यादि कारयन्नृपः । चित्रकृन्मरुतां चक्रे प्रवे-
शोत्सवमुज्ज्वलम् ॥ १४८ ॥ ततःप्रभृति भूपालः, शृण्वानो धर्मदेशनाम् । वर्षाणि गमयामास कतिचित्क्षणवत्तदा ॥ १४९ ॥ विनयादि-
गुणौघेन सुतस्य रञ्जिताशयः । भद्रंकरक्ष्माधीशो मेने स्वं धन्यमेव हि ॥ १५० ॥ यतः—"पत्नी प्रेमवती सुतः सविनयो भ्राता गुणालंकृतः,
स्निग्धो बन्धुजनः सखाऽतिचतुरो नित्यं प्रसन्नः प्रभुः । निर्लोभोऽनुचरः परार्तिशमने प्राप्तोपयोगं धनं कल्याणाभ्युदयेन संततमिदं कस्यापि
संपद्यते ॥ १ ॥ " श्रेयःकथां वितन्वानः समासीनः सभां नृपः । प्रणतः केनचित्पुंसा समागत्येति सद्गिरा ॥ १५१ ॥ पप्रच्छ नृपतिर्वा-
र्तामिनि तं पुरुषं स्फुटम् । कुतो देशात्कुतः पुर्याः किमर्थं ते समागमः ? ॥ १५२ ॥ योजयित्वा करौ नत्वा प्रोवाचेति पुमांस्तदा ॥ इतोऽ-
स्ति नगरी चन्द्रभागा सुरपुरीसमा ॥ १५३ ॥ तत्रासीद्भूपतिश्चन्द्रशेखरश्चन्द्रसंनिभः । यन्नामाकर्णमात्रेण पलायांचक्रिरेऽरयः ॥ १५४ ॥ चन्द्र-
दत्तेति नाम्नाऽसीद् गृहिणी तस्य भूपतेः । शचीव सुरनाथस्य सीतेव रामभूभुजः ॥ १५५ ॥ तयोश्च कुर्वतोर्धर्मं वीतरागोदितं सदा । किया-
नप्यगमत् कालः शक्रशच्योरिव क्षणात् ॥ १५६ ॥ सुखसुप्ता विभावर्यां चन्द्रदत्तैकदा स्फुटम् । स्वप्ने पूर्णेन्दुमीक्ष्यास्ये प्रविशन्तमजागरीत् ॥
१५७ ॥ स्वप्नं चित्ते स्थिरीकृत्य, गत्वा च भूपसंनिधौ । कथयामास सा स्वप्नस्वरूपं भूभुजेऽखिलम् ॥ १५८ ॥ चित्ते विचारयित्वाऽऽह
भूमीपतिः प्रियां प्रति । संपूर्णे दिवसे भावी यशस्वी नन्दनस्तव ॥ १५९ ॥ प्रगेऽथ भूभुजा पृष्टैः कोविदैः स्वप्नपाठकैः । न्यगादीति मही-

नाथ ! तव भावी सुतोऽनघः ॥ १६० ॥ यतः—" स्वप्नश्च प्रथमे यामे संवत्सरविपाककृत् । द्वितीये चाष्टभिर्मासैस्त्रिभिर्मासैस्त्रियामके ॥ १ ॥ अरुणोदयवेलायां दशाहेन फलं भवेत् " इत्यादि ॥ " कृष्णं कृत्स्नमशस्तं मुक्त्वा गोवाजिराजगजदेवान् । सकलं शुक्लं शस्तं मुक्त्वा कर्पासलवणानि ॥ १ ॥ " प्रपूर्णदोहदा पूर्णमासा सा सुमुखी सुखम् । चन्द्रदत्ता दिने वर्येऽसूत पुत्रं मनोहरम् ॥ १६१ ॥ गीतनृत्यादिकं कृत्वा सम्मान्य स्वजनं पुनः । पुत्राय प्रददौ नाम, चन्द्रसेनेति भूपतिः ॥ १६२ ॥ ततःप्रभृति भूपस्य सत्स्वप्नसूचिताङ्गजाः । बभूवुर्बहवो वर्यबलसौन्दर्यशालिनः ॥ १६३ ॥ एकदा दम्पती वार्तां कुर्वाणौ तौ मनोरमाम् । प्रेमप्रपूरितावित्थं जजल्पतुः परस्परम् ॥ १६४ ॥ एकाऽप्यभूत्सुता नैव पुत्रमङ्गलकारिणी । पुत्रवान् तनयामिच्छेत् पुत्रीवान् तनयं यतः ॥ १६५ ॥ प्रोवाच विनयेनेति चन्द्रदत्ता महीपतिम् । कुलक्रमागता चक्रेश्वर्यस्ति देवताऽऽवयोः ॥ १६६ ॥ विद्यते यदि भाग्यं चावयोश्चक्रेश्वरी तदा । आराधिता सुताभाविस्वरूपं कथयिष्यति ॥ १६७ ॥ एकाग्रयोस्तयोश्चक्रेश्वर्याः सेवां वितन्वतोः । प्रत्यक्षीभूय संतुष्टा जजल्पेत्थमिदं स्फुटम् ॥ १६८ ॥ भाग्यतो भवतोर्वर्षद्वितीयातिक्रमे सति । भविष्यति सुता वर्या सुन्दरस्वप्नसूचिता ॥ १६९ ॥ इत्युदित्वा गता चक्रेश्वरी निजनिकेतनम् । राजाऽपि स्वगृहे प्राप्तः कुरुते धर्ममन्वहम् ॥ १७० ॥ वर्षद्वये गते चन्द्रदत्ता स्वप्ने निशि स्फुटम् । विशन्तीं वदने पद्मां वीक्ष्य जागरिता क्षणात् ॥ १७१ ॥ आगत्योपनृपं स्वप्नस्वरूपं शुभकारकम् । कथयामास भूपाय चन्द्रदत्ता सतीतमा ॥ १७२ ॥ तदा विचार्य भूपेन जगदे गेहिनीं प्रति । संपूर्णे दिवसे पुत्री भाविनी तेऽतिसुन्दरा ॥ १७३ ॥ श्रुत्वेति हर्षिता राज्ञी तथेति प्रतिपद्य च । आजगाम निजं स्थानं स्मरन्ती मानसे जिनम् ॥ १७४ ॥ उत्थायाथ सखीः सर्वाः गायन्तीश्च जिनेशितुः । गुणान् राज्ञी निशां सर्वां निनाय क्षणवत्तदा ॥ १७५ ॥ चन्द्रदत्ता ततो नित्यं कुर्वाणार्चां जिनेशितुः । सुखेन गमयामास कियन्तं समयं क्षणात् ॥ १७६ ॥ प्रपूर्णदोहदा पूर्णे मासे भूमीपतिप्रिया । सुवेलायां प्रसूते स्म सुतां गङ्गेव

पद्मिनीम् ॥ १७७ ॥ षष्ठी जागरणं कृत्वा गीतनृत्यपुरस्सरम् । स्वजनान् वस्त्रताम्बूलादिभिरौवर्ज्य च भृशम् ॥ १७८ ॥ पूजयित्वा सुमैर्वर्यै-र्देवीं चक्रेश्वरीं पुनः । सुतायै प्रददौ नाम पद्मश्रीरिति भूपतिः ॥ १७९ ॥ युग्मम् ॥ ततःप्रभृति भूपस्य राज्यश्रीर्वव्धेऽधिकम् । गजाश्वव-लवत्पत्तिरथदेशादिभिः क्रमात् ॥ १८० ॥ कलाचार्यसमीपस्था पठन्ती द्युनिशं च सा । चतुःषष्टिकलाकेलिकलिताऽभवदञ्जसा ॥ १८१ ॥ उक्तं च—" नृत्य १ औचित्य २ चित्र ३ वादित्र ४ मन्त्र ५ तन्त्र ६ ज्ञात ७ विज्ञान ८ दम्भ ९ जलस्तम्भ १० गीत ११ तालमान १२ मेघवृष्टि १३ फलाकृष्टि १४ आरामारोपण १५ आकारगोपन १६ धर्मविचार १७ शकुनसारु(र) १८ क्रियाकल्प १९ संस्कृतजल्प २० प्रसा-दनीति २१ धर्मनीति २२ वर्णिकावृद्धि २३ सुवर्णसिद्धि २४ सुरभितैलकरण २५ लीलासंचरण २६ गजतुरङ्गमपरीक्षण २७ स्त्रीपुरुषल-क्षण २८ सुवर्णरत्नभेद २९ अष्टादशलिपिच्छेद ३० तत्कालबुद्धि ३१ वास्तुसिद्धि ३२ वैद्यकक्रिया ३३ कामविक्रिया ३४ घटभ्रम ३५ सारिपरिश्रम ३६ अनङ्गयोग ३७ चूर्णयोग ३८ हस्तलाघव ३९ वचनपाटव ४० समस्यापूरण ४१ भोज्यविधि ४२ वाणिज्यविधि ४३ मुख-मण्डन ४४ शालिखण्डन ४५ कथाकथन ४६ पुष्पग्रन्थन ४७ वक्रोक्ति ४८ वाक्यशक्ति ४९ आभरण ५० स्फारवेष ५१ सकलभाषाविशेष ५२ अभिधानज्ञान ५३ भृत्योपचार ५४ गृहाचार ५५ व्याकरण ५६ परनिराकरण ५७ रन्धन ५८ केशबन्धन ५९ वीणावादन ६० वित-ण्डावाद ६१ अङ्कविचार ६२ लोकव्यवहार ६३ प्रश्नप्रहेलिका ६४ ॥ " एकदा प्रेषिता मात्रा जनकस्यान्तिके सुता । वरयोग्यां नृपस्तां च ज्ञात्वा चिन्तितवानिति ॥ १८२ ॥ अस्यास्तुल्यो वरः कोऽपि कस्यास्ति पृथिवीपतेः । इति चिन्ताकुलं भूपं दृष्ट्वाऽवक् सचिवाग्रणीः ॥ १८३ ॥ स्वामिन्नस्ति वरा भद्रपुरी लक्ष्मीनिकेतनम् । तत्रास्ति भूपतिर्भद्रंकरः सर्वनयालयः ॥ १८४ ॥ तस्यास्ति नन्दनः शीलमालाकु-क्षिभवोऽनघः । पुण्यधनाभिधो रूपश्रिया निर्जितमन्मथः ॥ १८५ ॥ रूपश्रीयुक्तयोर्योगो यदि स्यादेतयोर्नृप ! । तदा शशाङ्करोहिण्योरिव

शोभा भवेद् ध्रुवम् ॥ १८६ ॥ विमृश्येति ततो भूपमन्त्रिभ्यां तत्कृतेऽहकम् । महितोऽस्मि भवत्पार्श्वे,भद्रंकरोवधारय ॥ १८७ ॥ आलोच्य स्वजनैः सार्धं,भद्रंकरनृपस्ततः । नन्दनस्य विवाहार्थं,चचाल बलसंयुतः ॥ १८८ ॥ भद्रंकरस्य भूपस्य,गच्छतस्तस्य वर्त्मनि । बभूवुः शकुना वर्यतमा इति शुभप्रदाः ॥ १८९ ॥ कौशिकाश्वशिवादेवीखराणां मधुरस्वनाः । बभूवुर्वामतो राज्ञो,गच्छतः शुभदायकाः ॥ १९० ॥ जिनेन्द्रप्रतिमाछत्र,चामरामलदर्पणाः । वर्धापनप्रदीपौ च सम्मुखा अभवंस्तदा ॥ १९१ ॥ युग्मम् ॥ रूपलावण्यसंयुक्तो,यौवनस्थो मुनीश्वरः । कायोत्सर्गस्थितो,मार्गे गच्छताऽदर्शि भूभुजा ॥ १९२ ॥ उत्तीर्य वाहनाद्यावत्प्रणामं कुरुते नृपः । तावत्कर्मक्षयात्तस्य,मुनेर्ज्ञानमजायत ॥ १९३ ॥ यतः—"प्रणिहन्ति क्षणार्धेन,साम्यमालम्ब्य कर्म तत् । यन्न हन्यान्नरस्तीव्रतपसा जन्मकोटिभिः ॥ १ ॥ जं अन्नाणी कम्मं,खवेइ बहुआइं वासकोडीहिं । तं नाणी तिहिं,गुत्तो खवेइ ऊसासमित्तेण ॥ २ ॥" तदा तत्र समागत्य कोटिकोट्यो दिवौकसः । नमस्कृत्य महाभक्त्या व्यधुः काञ्चनवारिजम् ॥ १९४ ॥ यतः—"पंचसु जिणकल्लाणेसु,चेव महरिसितवाणुभावाओ । जम्मंतरनेहेण य,आगच्छंती सुरा इहयं ॥ १ ॥" ततः सुवर्णपाथोजमासीनो मुनिपुङ्गवः । भद्रंकरेण भूपेन,नमश्चक्रे च भक्तितः ॥ १९५ ॥ देवदुन्दुभयो नेदुः,पुष्पवृष्टिर्भूदिवः । महोत्सवं व्यधुर्देवा,भक्तिभावितमानसाः ॥ १९६ ॥ अथारेभे मुनिर्धर्मदेशनां मधुरध्वनिः । संसारसागरोन्मज्जज्जनवाहनसंनिभाम् ॥ १९७ ॥ तथाहि—पूजा जिनेन्द्रेषु रतिर्व्रतेषु,रुचिश्च सामायिकपौषधेषु । दानं सुपात्रे श्रवणं श्रुते च,सत्साधुसेवा शिवमार्ग एषः ॥ १९८ ॥ पुष्पाद्यर्चा तदाज्ञा च तद्द्रव्यपरिरक्षणम् । उत्सवास्तीर्थयात्रा च भक्तिः पञ्चविधा जिने ॥ १९९ ॥ स्नानं मनोमलत्यागो,दानं त्वभयदक्षिणा । ज्ञानं तत्त्वार्थसंबोधो,ध्यानं निर्विषयं मनः ॥ २०० ॥ आर्यदेशकुलरूपबलायुर्बुद्धिबन्धुरमवाप्य नरो यः । धर्मकर्म न करोति सुभावात्,पोतमुज्झति पयोधिगतः सः ॥ २०१ ॥ दारिद्रहरणं दानं,शीलं दुर्गतिनाशनम् । अज्ञाननाशिनी प्रज्ञा,भावना भवनाशिनी ॥ २०२ ॥ क्ष्माभृ-

,द्रंकककयोर्मनीषिजडयोः सद्रूपनीरूपयोः श्रीमद्दुर्गतयोर्बलाबलवतोर्नीरोगरोगार्त्तयोः। सौभाग्यासुभगत्वसङ्गमजुषोस्तुल्येऽपि नृत्वे पुनर्नानाभावनिबन्धनं भवति नो, कर्मान्तरेणैह च ॥ २०३ ॥ लक्ष्मीः पाणितले तस्य, स्वर्गस्तस्य गृहाङ्गणे। कुरुते यो जनः सर्वजीवरक्षां सदादरात् ॥ २०४ ॥ कुसंसर्गाज्जिनाः पापासक्ताः केचिद्दुपक्रमैः। भूरिभिर्मार्गमाप्यन्ते धनभूमीशवत् स्फुटम् ॥ २०५ ॥ तथाहि—आसीत्पुष्पधराधीशो धनो धीरनृपाङ्गजः। न्यायी जीवदयामूलधर्मज्ञो धर्मशेखरः ॥ २०६ ॥ मन्त्री भीमाह्वयः क्रूरकर्मा निर्दयमानसः। लोकाश्च तादृशा आसन् पापिष्ठा दुष्टमानसाः ॥ २०७ ॥ तेषां संसर्गतः क्रूरकर्माऽभूद्धनभूपतिः। कुसंगात्पिचुमन्दस्य, चूतः किं न कटुर्भवेत् ? ॥ २०८ ॥ यतः—"अंबस्स य निंबस्स य, दुण्हंपि समागयाइं मूलाइं। संसग्गीइ विणट्ठो, अंबो निंबत्तणं पत्तो ॥ १ ॥ जो जारिसेण मित्तिं, करइ अचिरेण तारिसो होइ। कुसुमेहिं सह वसंता, तिलावि तग्गंधिया हुंति ॥ २ ॥ कुसंसर्गात्कुलीनानां, भवेदभ्युदयः कुतः ?। कदली नन्दति कियद्वदरीतरुसंनिधौ ॥ ३ ॥ सदा दुर्जनसंसर्गो, विपदे वृत्तशालिनाम्। वारिहारि घटी पार्श्वे, ताड्यते पश्य झल्लरी ॥ ४ ॥" विप्रवेषो मरुत् कश्चित्, समेत्य त्रिदशालयात्। सभासीनाय भूपायाशीर्वादं दत्तवानिति ॥ २०९ ॥ भवताद्दीर्घमायुस्ते, शौर्यादिगुणशालिने। तवाधारे यतो लोका, वर्तन्ते स्म वृषेषिणः ॥ २१० ॥ व्यापादयन्ति ये जीवान्, मर्त्या निर्दयमानसाः। नरकेषु भृशं दुःखं, सहन्ते ते न संशयः ॥ २११ ॥ पुराणेऽप्युक्तम्—" यूपं कृत्वा पशून् हत्वा, कृत्वा रुधिरकर्दमम्। यद्येवं गम्यते स्वर्गे, नरके केन गम्यते ? ॥ १ ॥" मार्यमाणस्य हेमाद्रिं, राज्यं वापि प्रयच्छति। तदनिष्टं परित्यज्य, जीवो जीवितमिच्छति ॥ २१२ ॥ मातृवत्परदाराणि, परद्रव्याणि लोष्ठवत्। आत्मवत्सर्वभूतानि, यः पश्यति स पश्यति ॥ २१३ ॥ हेमधेनुधरादीनां, दातारः सुलभा भुवि। दुर्लभः पुरुषो लोके, यः प्राणिष्वभयप्रदः ॥ ११४ ॥ चत्वारो नरकद्वाराः, प्रथमं रात्रिभोजनम्। परस्त्रीगमनं चैव, संधानानन्तकायिकं ॥ २१५ ॥ अस्तंगते दिवानाथे, आपो रुधिरमुच्यते। अन्नं

मांससमं प्रोक्तं, मार्कण्डेन महर्षिणा ॥ २१६ ॥ यस्मिन् गृहे सदन्नार्थं, मूलकः पच्यते जनैः । स्मशानतुल्यं तद्वेश्म, पितृभिः परिवर्जितम् ॥ २१७ ॥
श्रुत्वा द्विजन्मनस्तस्य, वचो हिंसानिवर्तकम् । न मनाग् वलितं भूपचित्तं हिंसादिसेवनात् ॥ २१८ ॥ कियत्यपि गते काले, कृत्वा वेषं तप-
स्विनः । समागतस्सोऽपि बोधाय, नृपपार्श्वेऽवदत्पुनः ॥ २१९ ॥ हंतूण परप्पाणे, अप्पाणं जे कुणंति सप्पाणं । अप्पाणं दिवसाणं कएण ना-
सेइ अप्पाणं ॥ २२० ॥ पङ्गुकुष्ठिकुणित्वादि, दृष्ट्वा हिंसाफलं सुधीः । निरागस्त्रसजन्तूनां, हिंसां संकल्पतस्त्यजेत् ॥ २२१ ॥ वने निरप-
राधानां, वायुतोयतृणाशिनाम् । निघ्नन् मृगाणां मांसार्थी, विशिष्येत कथं शुनः ? ॥ २२२ ॥ अशनीयन् सदा मांसं, दया यो हि चिकीर्षति ।
ज्वलति ज्वलने वल्लीं, स रोपयितुमिच्छति ॥ २२३ ॥ नाकृत्वा प्राणिनां हिंसां, मांसमुत्पद्यते क्वचित् । न च प्राणिवधात्स्वर्गस्तस्मान्मांसं
विवर्जयेत् ॥ २२४ ॥ म्रियस्वेत्युच्यमानोऽपि, देही भवति दुःखितः । मार्यमाणः प्रहरणैर्दारुणैः स कथं भवेत् ? ॥ २२५ ॥ श्रूयते प्राणि-
घातेन, रौद्रध्यानपरायणौ । सुभूमो ब्रह्मदत्तश्च सप्तमं नरकं गतौ ॥ २२६ ॥ यदिह क्रियते कर्म, तत्परत्रोपभुज्यते । मूले सिक्तेषु वृक्षेषु, फलं
शाखासु जायते ॥ २२७ ॥ तेनेत्थं बोधितो भूपो, न तत्याज कदाग्रहम् । षण्मासनलिकाक्षिप्तं, श्वपुच्छं किं भवेद् ऋजुः ? ॥ २२८ ॥ यतः—
" वज्रलेपस्य मूर्खस्य नारीणां मर्कटस्य च । एको ग्रहोऽस्ति मीनानां नीलीमद्यपयोस्तथा ॥ १ ॥ दूधिइं सींचिउ लींबडउं, थाणउं किं उ
गुलेण । तोइं न मुंचइ कडुअपणु, जातिहिं तणइं गुणेण ॥ २ ॥ " नीलवस्त्रावृतैः सर्वैः, सेवकैरेकदा नृपः । पापर्धिं कर्त्तुकामोऽगात्क्रूरकर्मा
वनान्तरम् ॥ २२९ ॥ दृष्ट्वैकं हरिणं भूपः, परिवारपरिवृतः । विशिखैर्भूषयामास, शिवां सिंसोलकैरिव ॥ २३० ॥ मृगमीनसज्जनानां तृण-
जलसंतोषविहितवृत्तीनाम् । लुब्धकधीवरपिशुना, निष्कारणवैरिणो लोके ॥ २३१ ॥ ततो जल्पन्निदं मर्त्यभाषया बाणवेष्टितः । तिरोऽभूद्ध-
रिणो भूमिपतौ तत्र समागते ॥ २३२ ॥ चित्ते चमत्कृतिं चिन्वन्, विषादभ्रमदाकुलः । अग्रतश्चलितस्तद्वद्धन्तुं भूमिपतिः पशून् ॥ २३३ ॥

जलाशयाद्बहिर्भूतं,मीनं वीक्ष्यावनीपतिः । तं हन्तुं दूरतोऽमुञ्चद्बाणौघान् सपरिच्छदः ॥ २३४ ॥ मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् । लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥ २३५ ॥ मनुष्यभाषया मीनो,जल्पन्नित्थं शरान्वितः । तिरोभूय ययौ क्वापि भूपे तत्र समागते ॥ २३६ ॥ गच्छन् भूपोऽग्रतो वीक्ष्यागच्छन्तं शशकं वने । भूषयामास वाणौघैर्गगनं तारकैरिव ॥ २३७ ॥ अतिक्रूरस्वभावं तं,भूपतिं सपरिच्छदम् । विज्ञाय शशको मर्त्यभाषया मोचिवानिति ॥ २३८ ॥ राजा राक्षसरूपेण,व्याघ्ररूपेण मन्त्रिणः । लोको गर्दभरूपेण,यः पलाति स जीवति ॥ २३९ ॥ मनुष्यभाषया भूयो,जल्पन्नित्थं शरान्वितः । तिरोऽभूच्छशको भूमिपतौ तत्रागते क्षणात् ॥ २४० ॥ व्रजन् भूपोऽग्रतो वीक्ष्य,महाकायं च सूकरम् । भूषयामास तं वाणैर्निर्दयः क्रूरमानसः ॥ २४१ ॥ सूकरः प्राह—हन्मीति जन्मजनितं सुकृतं निहन्ति,शस्त्रग्रहाद्दशभवार्जितमेव पुण्यम् । शस्त्राभिघातसमये शतजन्मजातं,यत्किञ्चिदस्ति लवमत्र तदापरासौ ॥ २४२ ॥ वनवासी तृणाहारी,पशुदीनः कृपास्पदम् । राजन्! कथमहं वाणैस्त्वयाऽयाति निराश्रयः ॥ २४३ ॥ इदमुक्त्वा बभूवाशु,कलधौतमयश्च सः । तं तादृशं महीजानिर्निरीक्ष्य मुमुदेतराम् ॥ २४४ ॥ तदैवोत्पाटयित्वा तं,क्रोडं हेममयं नृपः । मोचयामास यत्नेन,भाण्डागारे स्वसेवकैः ॥ २४५ ॥ प्रातरुत्थाय तं द्रष्टुं,यावदायाति भूपतिः । तावदश्ममयं क्रोडं,निरीक्ष्याभूद्विषण्णधीः ॥ २४६ ॥ भीतिर्मदः सेतुर्नरो मनुष्यो हीरश्च सेना नगनाममाया । नौका च नीवी तिमिरं च भानुः जगन्नयौ पूर्णवने भदन्तः ॥ २४७ ॥ वेश्या सुधा तारकवारणौ च वान्तिश्च यानं पुररेणुके च । चण्डो द्रवो भूरिभुजो जयश्च एतच्च बोधाय तवास्ति राजन्! ॥ २४८ ॥ तस्य पृष्ठाविदं वृत्तद्वयं वीक्ष्यावनीपतिः । वाचयन् नैव जानाति तस्य अर्थं मनागपि ॥ २४९ ॥ आकार्य पण्डितान् सर्वान् ततः प्राहेति भूपतिः । अर्थं काव्यद्वयस्यास्य कथयन्तु ममाग्रतः ॥ २५० ॥ पुनः पुनश्च विद्वद्भिर्वाचयद्भिः स्वबुद्धितः । अर्थो नैव मनाग् ज्ञातो जाता यामद्वयी ततः ॥ २५१ ॥ प्रतिज्ञां पण्डिताः सर्वे कारिता इति

भूभुजा । वक्तव्योऽर्थोऽनयोर्मासप्रान्ते भवद्भिरञ्जसा ॥ २५२ ॥ अन्यथा घाणके क्षिप्त्वा निखिलान् पण्डितान् स्फुटम् । पीलयिष्याम्यहं बाढं तिलपुञ्जमिवाचिरात् ॥ २५३ ॥ तयोरर्थकृते सर्वे पण्डिता मृत्युभीरवः । ययुः सर्वासु च दिक्षु पृथक् पृथक् कृतत्वराः ॥ २५४ ॥ अलब्धार्थाश्चतसृभ्यो दिग्भ्यो भ्रान्त्वाऽतिदूरतः । समागत्य गृहे छन्नं स्थिता भीतास्त्रयस्तदा ॥ २५५ ॥ यतः—“अमेध्यमध्ये कीटस्य सुरेन्द्रस्य सुरालये । समाना जीविताकाङ्क्षा समं मृत्युभयं द्वयोः ॥ १ ॥” भ्रामं भ्रामं बहून् देशान् चतुर्थो वलितो बुधः । रात्रौ वीक्ष्य पुरद्वारं दत्तं व्याघुटितस्ततः ॥ २५६ ॥ कस्यचित्पादपस्याधः सुप्तश्चिन्ताकुलस्तदा । तदार्त्या तस्य नायाति निद्रा मृत्युभयं यतः ॥ २५७ ॥ कुर्वन् गोष्ठीं तदा सार्धं पत्न्या प्रीतिपुरस्सरम् । वृक्षस्थः किन्नरः प्राह किन्नरीं विहसन्निति ॥ २५८ ॥ प्रियेऽस्मिन् नगरे मूर्खाः पण्डिताः सन्ति भूरिशः । काव्यद्वयार्थमुर्वीशपृष्टं जग्मुर्यतो नहि ॥ २५९ ॥ पण्डितानां च सर्वेषां समेतानां मगे पुनः । संहारं सकुटुम्बानां करिष्यति महीधवः ॥ २६० ॥ किन्नरी प्राह भोः स्वामिन् ! वेत्स्यर्थं त्वं तयोः किमु ? । जानामीत्युदिते साऽवक् तर्हि ब्रूहि पते ! स्फुटम् ॥ २६१ ॥ कथितं तेन किंनर्याः पुरः प्रीतिपुरस्सरम् । शब्दाद्यक्षरतः सर्वो ज्ञायतेऽर्थो न संशयः ॥ २६२ ॥ श्लोकद्वयार्थमेताय ज्ञात्वा तस्याननात्तदा । हृष्टो दध्यौ बुधो भाग्योदयो मेऽजनि संप्रति ॥ २६३ ॥ स्थाने निवासः सरलं कलत्रं पुत्रः पवित्रः सुजनानुयोगः । न्यायाच्च वित्तं सरलं सुचित्तं निश्छद्मधर्मस्य सुखानि सप्त ॥ २६४ ॥ हर्षितः पुरमभ्येत्य सर्वपण्डितसंयुतः । जल्पितुं काव्ययोरर्थं ययौ भूपतिसंनिधौ ॥ २६५ ॥ तेषु सर्वेषु पश्यत्सु चतुर्थः पण्डितस्तदा । किरिपृष्टाविमं श्लोकं विस्पष्टार्थं लिलेख च ॥ २६६ ॥ तथाहि—भीमसेनमहीसेननामानौ नीलकंआजनम् । पूर्वभवे सुतावावां यापुरे चन्द्रभूभुजः ॥ २६७ ॥ झगित्यर्थं महीजानिर्मत्वा मूर्च्छामुपेयिवान् । शीतोपचारतः स्वस्थोऽकारि मन्त्र्यादिभिस्तदा ॥ २६८ ॥ जातिस्मरणतोऽस्मार्षीद्यावत्पूर्वभवं नृपः । तावत्क्रोडः सुरीभूय समायातो नृपाग्रतः ॥ २६९ ॥ सुरो जजल्प

भो भ्रातः ! ज्ञातः पूर्वभवस्त्वया। नृपेणोक्तं च युष्माकं,प्रसत्तेर्ज्ञात एव हि ॥ २७० ॥ पूर्वभवकृता कक्षा,पूरिता मयका छलात्.। इत्युक्त्वा निर्जरः सद्यो,विद्युदिव तिरोदधे ॥ २७१ ॥ वैराग्यवान् व्रताकाङ्क्षी,यावदासीन्महीपतिः । तावत्तत्रागमद्विद्याचारणः श्रमणोत्तमः ॥ २७२ ॥ वन्दित्वा विधिवद्भूपस्तमृपिं विनयान्वितः । अनुग्रहाय लोकानां,पृष्टवान् प्राग्भवं भवम् ॥ २७३ ॥ मुनिराचष्ट भो भूप! शृणु पूर्वं भवं निजम्। यापुरेऽभून्महीजानिश्चन्द्रनामा प्रजाहितः ॥ २७४ ॥ भीमसेनमहीसेनौ,तस्याभूतां सुतौ वरौ । मिथः प्रीतिजुषौ रामलक्ष्मणाविव संततम् ॥ २७५ ॥ एकदा धर्मघोषाह्वा,आगमंस्तत्र सूरयः । धर्मं श्रोतुमगाच्चन्द्रभूपः सुतद्वयाऽन्वितः ॥ २७६ ॥ "आउं दीहमरोगमंगमसमं रूपं पविट्ठं बलं सोहग्गं तिजगुत्तमं निरुवमो भोगो जसो निम्मलो । आएसिकपरायणो परिअणो लच्छी अविच्छेयणी होज्जा तस्स भवंतरेण कुणइ जो जीवाणुकंपं नरो ॥ २७७ ॥ सच्चेण पावेइ पहाणकित्तिं,सच्चेण पावेइ न चेव छित्तिं । सच्चेण वीसासमुवेइ लोए,सच्चेण पावेइ सुहाणु जोए ॥ २७८ ॥ अदत्तचाएण भवन्ति भोगा,अदत्तचाएण विसिठ्ठजोगा । अदत्तचाएण न होइ दंडो,अदत्तचाएण भवे सुपिंडो ॥ २७९ ॥ चोरा परलोगंमि वि,नारयतिरिएसु लहइ दुक्खाइं । दारिद्दोवद्दूओ होइ,मणुअत्तणेवि दीणधणो ॥ २८० ॥ बंभवएणं वररूवभोगो,बंभवएणं मणुएसु जोगो । बंभवएणं न नपुंसकत्तं,बंभवएणं भवई सुरत्तं ॥ २८१ ॥ अपरिग्गहेणं हवई सुवित्तं,अपरिग्गहेणं वरवत्थपत्तं । अपरिग्गहेणं धणधन्नरिद्धी, अपरिग्गहेणं तु कमेण सिद्धी ॥ २८२ ॥ जलाशयानां जलधिर्मणीनां, चिन्तामणिः कल्पतरुस्तरूणाम्। तार्क्ष्यः खगानां दिनकृद्ग्रहाणां,प्रशस्यते मर्त्यभवो भवानाम् ॥ २८३ ॥" श्रुत्वा धर्ममदाच्चन्द्रः सम्यक्त्वं शिवशर्मदम्। भीमसेनमहीसेनौ ललतुर्व्रतमादिमम् ॥ २८४ ॥ पालयन्तौ व्रतं सम्यक् प्रतिज्ञां चक्रतुर्मिथः । पापग्रस्तो निषेध्योऽहं त्वया त्वं तु मया पुनः ॥ २८५ ॥ भीमसेनो मृतिं प्राप्य,सद्यः स्वर्गमुपेयिवान्। महीसेनोऽपि धीरस्य,पुत्रोऽजनि धनाभिधः ॥ २८६ ॥ कुसंसर्गान्महापापासक्तो निर्घुणमा-

नसः । मृगादीन् श्वापदान् दीनान्, हिंसन् निरपराधिनः ॥ २८७ ॥ आगत्य मरुता भीमसेनजीवेन नाकतः । मृगादीन् कृत्रिमान् कृत्वा,
बोधितोऽयं महीपतिः ॥ २८८ ॥ युग्मम् ॥ आकर्ण्य भूपतेः पूर्वभववृत्तं जनास्तदा । धर्मे जीवदयामूले, मनस्तेनुर्निरन्तरम् ॥ २८९ ॥ यतः—
" आसन्ने परमपए, पावेअव्वंमि सयलकल्लाणे । जीवो जिणिंदभणिअं, पडिवज्जइ भावओ धम्मं ॥ १ ॥ " राज्यं दत्त्वा सुतायाथ, गृहीत्वा
व्रतमञ्जसा । तप्त्वा तीव्रं तपः स्वर्गमगमद्धनभूपतिः ॥ २९० ॥ इत्यादिदेशनां श्रुत्वा, भवाम्भोधितरीनिभाम् । मुनिं नत्वा पुनः प्राह, भूपतिः
विनयान्वितः ॥ २९१ ॥ यौवनावसरे येन, हेतुनाऽभूद् व्रतं तव । ममाग्रे निखिलं तद्धि, स्वरूपं कथय प्रभो ! ॥ २९२ ॥ अथाऽऽचष्ट मुनि-
स्पष्टं, गिरा मधुरया तदा । अस्ति श्रीसुन्दरं नाम्ना, पुरं सुरपुरोपमम् ॥ २९३ ॥ तत्राभूत्पृथिवीपालः, प्रजापालाभिधो नयी । तस्यासीद्विम-
ला राज्ञी, शीलादिगुणभूषिता ॥ २९४ ॥ कुवार्णयोस्तयोर्धर्मप्रमादाज्जिनवरोदितम् । महीसेनाभिधः पुत्रो, बभूव वरलक्षणः ॥ २९५ ॥ अ-
न्येद्युर्बालकैस्तुल्यैः, क्रीडां कुर्वन्नृपाङ्गजः । जगाम द्वितीये यामे, उद्याने सुन्दराभिधे ॥ २९६ ॥ अभ्रंलिहं जिनागारं, निरीक्ष्य तत्र सुन्दरम् ।
प्रविवेश च तन्मध्ये, दृष्टवांश्चादिमं जिनम् ॥ २९७ ॥ नत्वा चिन्तितवानित्थं, किमिदं काननं पुरा । दृष्टं जिनवरागारं, भूरिमण्डपमण्डितम् ॥
२९८ ॥ इत्थं चिन्तयतस्तस्य, जातिस्मृतिरजायत । पूर्वसंसारसंभूतवृत्तस्मृतिरभूत्पुनः ॥ २९९ ॥ यतः—"रम्याणि वीक्ष्य मधुरांश्च निशम्य
शब्दान्, पर्युत्सुकी भवति यत्सुखितोऽपि जन्तुः । तच्चेतसा स्मरति नूनमबोधपूर्वं, भावस्थितानि जननान्तरसौहृदानि ॥ १ ॥ " अस्मिन्नेव
पुरेऽभूवं, भीमकर्मकराङ्गजः । सिंहसेनाभिधश्चाहं चारयामि स्म गोकुलम् ॥ ३०० ॥ अन्येद्युर्विपिने सोऽस्मिन् जिनं नन्तुं मुनीश्वरः । आजगाम
गुणारामस्तपःकृशवपुर्लता ॥ ३०१ ॥ सिंहसेनं प्रति प्राह, मुनीश्वर इति स्फुटम् । इयं जैनेश्वरी मूर्तिरर्चिता स्यात्सुखप्रदा ॥ ३०२ ॥ यो
जनोऽस्य जिनेन्द्रस्य, पूजां कृत्वाऽस्ति संततम् । तस्य स्याद्विपुलं राज्यं, मुक्तिलक्ष्मीश्च हेलया ॥ ३०३ ॥ यतः—"जिनेन्द्रपूजा सुगति

तनोति, ददाति राज्यं च सुरेन्द्रलक्ष्मीम्। छिनत्ति दुःखानि च देहभाजां, नीरोगतां राति सुरूपतां च॥ १ ॥ एकमपि येन कुसुमं, भगवतः प्र-
पूज्यते सबहुमानम्। तस्य नरामरशिवसुखफलानि करपल्लवस्थानि ॥ २ ॥" निशम्यैतद्वचस्तेन, गृहीतोऽभिग्रहोऽन्विति। अतःपरमहं
नाम्नि, विना पूजां जिनेशितुः ॥ ३०४ ॥ स्मारं स्मारं ऋषेस्तस्य, गुणग्रामान् मनोहरान्। सिंहसेनोऽर्हतः पुष्पैः, पूजां कृत्वाऽत्ति नित्यशः ॥
३०५ ॥ अन्येद्युर्गोपुराद्भिल्लैर्नीतो गोपो निजालये। तत्राभून्न जिनेन्द्रस्य, मूर्तिस्त्रैलोक्यपालिका ॥ ३०६ ॥ दशेत्थं दिवसान् तत्र, क्षुधया पी-
डितोऽहिंसः। मुक्तो धर्मप्रभावेन, तैश्चैकादशमे दिने ॥ ३०७ ॥ क्रामन्नथ महीं यावदायाति जिनसद्म सः। तावत्तस्यान्तराजातं, मरणं ध्या-
यतो जिनम् ॥ ३०८ ॥ अर्हत्पूजाप्रभावेन, प्रजापालनरेशितुः। अभूत्स नन्दनस्तस्य, महीसेनाभिधानतः ॥ ३०९ ॥ विज्ञाय प्राग्भवं वृत्तं,
जातिस्मरणयोगतः। भववैरङ्गिको जातो, महीसेनो नृपाङ्गजः ॥ ३१० ॥ ततो भूमिपतिं पर्यवसाप्यापि च मातरम्। प्रव्रज्याङ्गीकृता तेन,
महोत्सवपुरस्सरम् ॥ ३११ ॥ स एषोऽहं भवाद्भीतो, मुक्त्वा सर्वं कुटुम्बकम्। अलां दीक्षां भवाम्भोधितारणे तरणीनिभाम् ॥ ३१२ ॥
महीसेनमुनेर्वृत्तं, श्रुत्वा भद्रङ्करो नृपः। मानसे चिन्तयामास, तदानीमिति भावतः॥ ३१३ ॥ बाल्येऽपि मुनिनाऽनेन, दीक्षा कक्षीकृता ध्रुवम्।
वृद्धत्वेपि न मे राज्यजिहासाऽस्ति धिगस्तु माम् ॥ ३१४ ॥ चिन्तयित्वेति भूपालः, प्राह पुण्यधनं सुतम्। अतःपरं ममासारः, संसारो रो-
चते नहि ॥ ३१५ ॥ कृत्वा राज्यं महीशा ये, वृद्धत्वेऽपि त्यजन्ति न। मृत्वा ते नरके घोरे, गच्छन्त्येव न संशयः ॥ ३१६ ॥ कृत्वा राज्यं
महीशा ये, गृह्णन्त्यन्ते व्रतं पुनः। ते भवन्त्यचिरात्सिद्धिनगरीगामिनोऽङ्गज!॥ ३१७॥ पुण्यधनकुमाराय, दत्त्वा राज्यं महीपतिः। कुर्वन् महो-
त्सवं दीक्षामङ्गीचक्रेऽन्तिके मुनेः ॥ ३१८ ॥ भद्रङ्करमुनिस्तस्य, मुनीश्वरस्य संनिधौ। नानाविधं तपः कुर्वंस्तस्थौ तत्र सदाशयः ॥ ३१९ ॥
यतः—" आदौ तन्व्यो बृहन्मध्या विस्तरिण्यः पदे पदे। यायिन्यो न निवर्तन्ते सतामाशा सरित्समाः ॥ १ ॥" भद्रङ्करं मुनिं नत्वा, स्तुत्वा

च स्तवनैः पुनः। पुण्यधनोऽवनीनाथश्चचाल बलसंयुतः ॥ ३२० ॥ विलोकयन् बहून् देशान्,नगराकरशालिनः । पुण्यधनावनीपालश्च-
न्द्रभागां पुरीमगात् ॥ ३२१ ॥ आगच्छन्तं तमाकर्ण्य,चन्द्रशेखरभूपतिः । संमुखं प्रययौ कुर्वन्नुत्सवं विपुलं द्रुतम् ॥ ३२२ ॥ हर्षेण पूरित-
स्वान्तौ,मिलितौ तौ महीपती । पप्रच्छतुश्च कुशलं,किंवदन्तीं परस्परम् ॥ ३२३ ॥ प्रवेशोत्सवमाधाय,पुण्यधनावनीपतेः । वासवेश्म ददौ
चास्मै,चन्द्रशेखरभूपतिः ॥ ३२४ ॥ आकार्य गणकान् वर्यान्,ललौ लग्नं मनोरमम् । चन्द्रशेखरभूमीशो,भृशं कुर्वन् महोत्सवम् ॥ ३२५ ॥
शुद्धे लग्ने सुदिवसे,सद्वेलायां सदुत्सवैः। पुण्यधनाय भूपालः,सुतां पद्मश्रियं ददौ ॥ ३२६ ॥ तुरङ्गमगजस्वर्णदुकूलादिधनं बहु । भूमीपति-
र्ददौ पुण्यधनाय भक्तिपूर्वकम् ॥ ३२७ ॥ दिनानि कतिचित्तत्र,भूपदत्तनिकेतने । गोष्ठीं कुर्वन् महीशेन,तस्थौ पुण्यधनः समम् ॥ ३२८ ॥
यतः—“ गीतशास्त्रविनोदेन,कालो गच्छति धीमताम् । व्यसनेन हि मूर्खाणां,निद्रया कलहेन च ॥ १ ॥ ” एकदा चिन्तितं पुण्यधनेन
निशि मानसे । श्वशुरस्य गृहे नैव,शोभा भवति तिष्ठतः ॥ ३२९ ॥ यतः—“ उत्तमाः स्वगुणैः ख्याता,मध्यमास्तु पितुर्गुणैः । अधमा मा-
तुलैः ख्याताः,श्वशुरैश्चाधमाधमाः ॥ १ ॥ श्वशुरगृहनिवासः,स्वर्गतुल्यो नराणां, यदि वसति दिनानि,त्रीणि वा पञ्च सप्त । अथ कथमपि
तिष्ठेन्मिष्टलुब्धो वराको, निपतति खलु पात्रे,काञ्जिकं क्षिप्रयुक्तम् ॥ २ ॥ ” आपृच्छय नृपतिं पुण्यधनः पद्मश्रिया समम् । चचाल चल-
दश्वभकम्पितपृथिवीतलः ॥ ३३० ॥ मार्गे मुनिं महीसेनं,नत्वा श्रुत्वा च देशनाम् । भद्रङ्करमुनेश्चाथ,स्वरूपं पृष्टवान्नृपः ॥ ३३१ ॥ महीसेन-
मुनिः प्राह,तदा पुण्यधनं प्रति । वाचा मधुरया शर्मप्रदया धर्मयुक्तया ॥ ३३२ ॥ नानाविधं तपस्तप्त्वा,ध्यात्वा चार्हत्पदाम्बुजम् । भद्रङ्कर-
मुनिः स्वर्गं,चतुर्थमगमन्नृप ! ॥ ३३३ ॥ एगदिवसं पि जीवो,पव्वज्जमुवागओ अनन्नमणो । जइवि न पावइ मुक्खं,अवस्सवेमाणिओ होइ
॥ ३३४ ॥ सद्गतिं स्वपितुः श्रुत्वा,नत्वा च मुनिमुत्तमम् । चचाल च ततः पुण्यधनक्षोणीपतिः पथि ॥ ३३५ ॥ मार्गस्थितानि तीर्थानि,

वन्दमानः पदे पदे । भद्रङ्करीं पुरीं पुण्यधनः प्राप नराधिपः ॥ ३३६ ॥ न्यायमार्गं वितन्वानः,समस्तां वसुधां तदा । पालयामास भूपालः, पद्मापतिरिवानिशम् ॥ ३३७ ॥ मनोहरैर्जिनागारैर्भूषयामास भूतलम् । श्रीहरिषेणचक्रीव,भूपः कैलाससोदरैः ॥ ३३८ ॥ यतः—" जिणभवणबिम्बपुत्थय, संघस्सरूवाइं सत्तखित्तेसु । विविअं धणं पि जायइ, सिवफलमँहो अणंतगुणं ॥ १ ॥ प्रासादप्रतिमायात्रा,प्रतिष्ठा च प्रभावना । अमार्योद्घोषणादीनि,महापुण्यानि गेहिनाम् ॥ २ ॥ " विहरन्नेकदा तत्र,शीलसेनो गुरूत्तमः । अनेक साधुसंयुक्त,आजगाम पुराद्बहिः ॥ ३३९ ॥ उद्यानपालकेभ्योऽथागतं श्रुत्वा मुनीश्वरम् । विवन्दिषुर्नृपोऽचालीद्गृहाद्भूरिपरिच्छदः ॥ ३४० ॥ उत्तीर्य वाहनात्पञ्चविधाभिगमकृन्नृपः । त्रिःप्रदक्षिणयां चक्रे,मुनिं मेरुमिवार्यमा ॥ ३४१ ॥ यतः—" सचित्तदव्वमुज्झण १ मचित्तमणुज्झण २ मणेगत्तं ३ । इगसाडी उत्तरासंग ४ अंजली ५ सिरसि जिणदिट्ठे ॥ १ ॥ इअ पंचविहाभिगमो,अहवा मुंचंति रायचिह्नाइं । खग्गं १ छत्तं २ वाणह ३ मउडं ४ चमरे अ ५ पंचमए ॥ २ ॥ " शीलसेनं मुनिं नत्वा,कल्याणी भक्तिपूर्वकम् । उपविष्टोऽग्रतः श्रोतुं,प्रयतो धर्मदेशनाम् ॥ ३४२ ॥ तथाहि—"धर्मोऽयं धनवल्लभेषु धनदः,कामार्थिनां कामदः, सौभाग्यार्थिषु तत्प्रदः किमपरं,पुत्रार्थिनां पुत्रदः । राज्यार्थिष्वपि राज्यदः किमथवा,नानाविकल्पैर्नृणां, तत्किं यन्न ददाति किं च तनुते,स्वर्गापवर्गावपि ॥ ३४३ ॥ शास्त्रं बोधाय दानाय,धनं धर्माय जीवितं/ वपुः परोपकाराय,धारयन्ति मनीषिणः ॥ ३४४ ॥ दानं वित्तादृतं वाचः,कीर्तिधर्मौ तथायुषः । परोपकरणं कायादसारात्सारमुद्धरेत् ॥ ३४५ ॥ सर्वाः संपत्तयः सत्यं,जायन्ते तस्य जन्मिनः । प्राग्जन्मोपार्जितं यस्य,पुण्यद्रविणमूर्जितम् ॥ ३४६ ॥ आकृष्टिविद्यालक्ष्मीको, वज्रं दारिद्रभूभृतः । कार्मणं शर्मणामेकं,धर्म एव धरातले ॥ ३४७ ॥ असत्यं वचनं नैव,वदेत् प्राणात्ययेऽपि यः । स प्राप्नोति क्रमान्मुक्तिसुखं जिष्णुकुमारवत् ॥ ३४८ ॥ तथाहि—श्रीपुरं नाम्ना,जिनागारविराजितम् । तत्रासीत्कमलश्रेष्ठी,रमया धनदायितः ॥ ३४९ ॥ तस्याभून्नन्दनो जि-

ष्णुः, कमलाकुक्षिसंभवः । जिष्णू रूपश्रियाऽनङ्गं सत्येन च युधिष्ठिरम् ॥ ३५० ॥ पित्राथ पाठितो धर्मकर्मशास्त्राण्यनेकशः । यथा बभूव कु-
शलो, नयी गुणिगणाग्रणीः ॥ ३५१ ॥ यतः—" जायंमि जीवलोए, दो चेव नरेण सिक्खिअव्वाइं । कम्मेण जेण जीवइ, जेण मुओ सुगइं
जाइं ॥ १ ॥ दिनं भानुर्गृहं दीपो, निशामिन्दुर्विकस्वरः । प्रकाशयति पुत्रस्तु, निष्कलङ्कः कुलद्वयम् ॥ २ ॥ " अन्येद्युर्देवनाम्नान, आययुः
सूरयो वराः । तमस्तोमं हरन्तो गोगणैरिव सुधांशवः ॥ ३५२ ॥ यतः—" अवद्यमुक्तेः पथि यः प्रवर्तते, निवर्तयत्यन्यजनं च निःस्पृहः । स
एव सेव्यः स्वहितैषिणा गुरुः, स्वयं तरंस्तारयितुं क्षमः परान् ॥ १ ॥ अक्खर अक्खइ किंपि न ईहइ चउगइभवसंसारह बीहइ । संजमनिय-
महिं खण नवि चुक्कइ, एहवा धामी सुगुरु वुच्चइ ॥ २ ॥ कुखी संबलवत्तधण नवोलंबीहत्थ । एसा कहवि गवेसि, गुरु जे तारणह समत्थ ॥
३ ॥ " श्रुत्वाऽऽगतान् गुरून् श्रेष्ठी कमलः सुतसंयुतः । जगाम वन्दितुं धर्मशालायां मोदमेदुरः ॥ ३५३ ॥ त्रिः प्रदक्षिणयन् सूरिं, वन्दि-
त्वा चाग्रतो गुरोः । उपाविशत्ससुतोऽर्हद्धर्मं श्रोतुमनास्तदा ॥ ३५४ ॥ देवसूरिः सुधासिन्धुः, सुधामधुरया गिरा । दिदेश देशनां दुष्टदुः-
खशतविनाशिनीम् ॥ ३५५ ॥ तथाहि—अहिंसा सत्यमस्तेयं, ब्रह्मव्रतनिषेवणम् । अपरिग्रहता चैव, धर्म एष प्रतिष्ठितः ॥ ३५६ ॥ यतः—
" यथा चतुर्भिः कनकं परीक्ष्यते, निघर्षणच्छेदनतापताडनैः । तथैव धर्मो विदुषा परीक्ष्यते, श्रुतेन शीलेन तपोदयागुणैः ॥ १ ॥ " यदिह
क्रियते कर्म, तत्परत्रोपभुज्यते । मूलसिक्तेषु वृक्षेषु, फलं शाखासु जायते ॥ २ ॥ " केऽपि सहस्रंभरयो लक्षंभरयश्च केऽपि नराः । नात्मं-
भरयः केचित्फलमेतत्सुकृतदुष्कृतयोः ॥ ३५७ ॥ स्वल्पादपि मृषावादजल्पनाद्दर्शिनः खलु । लभन्ते विविधं दुःखं, चतुर्गतिषु भूरिशः ॥ ३५८ ॥
माणात्ययेऽपि यः कूटं, न प्रजल्पति मानवः । चक्रिशक्रमहीपालसुखं स लभतेऽचिरात् ॥ ३५९ ॥ निशम्य देशनां जिष्णुकुमारेण स्वभा-
वतः । यावज्जीवमलश्चक्रे, द्वितीयकं व्रतं तदा ॥ ३६० ॥ कमलश्रेष्ठिना तत्र, सम्यक्त्वं भवभेदकम् । अलञ्चक्रे गुरोः पार्श्वे, चक्र्यादिसुख-

दायकम् ॥ ३६१ ॥ यतः—"अंतोमुहुत्तमित्तं पि फासिअं जेहिं हुज्जसंमत्तं । तस्स अवड्ढोपुग्गलपरिअट्टो चेव संसारो ॥ १ ॥" वन्दित्वा कमलः श्रेष्ठी समुतोऽगान्निजं गृहम् । सूरयश्च ततश्चक्रुर्विहारं विशदाशयाः ॥ ३६२ ॥ सुनन्दश्रेष्ठिनः पुत्रीं, नाम्ना कनकसुन्दरीम् । शुभे लग्नेऽङ्गजो जिष्णुः, पित्राथ परिणायितः ॥ ३६३ ॥ कैलासाचलसंकाशान् प्रासादान् भूरिशोऽर्हतः । कारयामास कमलः, श्रेष्ठी शिष्टाशयः स्फुटम ॥ ३६४ ॥ मेलयित्वा वहून् श्राद्धान्, जनान् धर्मैककर्मठान् । शत्रुञ्जयमहातीर्थे, यात्रां च कमलो व्यधात् ॥ ३६५ ॥ पालयित्वा च सम्यक्त्वं, गृहीत्वाऽनशनं पुनः । जगाम कमलः श्रेष्ठी, स्वर्गिधाम जिनं स्मरन् ॥ ३६६ ॥ शोकं हत्वा ततो जिष्णुश्रेष्ठी सुव्यवहारतः । व्यवसायं करोति स्म, कुर्वन् धर्मं जिनेशितुः ॥ ३६७ ॥ एकदा स्वःपतिः शक्रसिंहासनसुपस्थितः । गृह्णाति स्म गुणान् जिष्णोः, सत्यवादभवानिति ॥ ३६८ ॥ कुर्वाण आर्हतं धर्मं, सेवमानश्च सद्गुरुम् । प्राणात्ययेऽपि नो वक्ति, कूटं जिष्णुवणिक्कदा ॥ ३६९ ॥ शक्रस्य वचनं कश्चिद्दनादत्यैव निर्जरः । जिष्णोः कर्तुं परीक्षां च, स्वर्गादागाद् भुवस्तले ॥ ३७० ॥ यतः—"नागुणी गुणिनं वेत्ति, गुणी गुणीषु मत्सरी । गुणी च गुणरागी च, विरलः सरलो जनः ॥ १ ॥ भग्गं न जायइ घडिउं, दुज्जणहिअयं कुलालभंडं व । सयखंडो वि वडिज्जइ, कंचणकलसो सुअणचित्तं ॥ २ ॥" अपहृत्य धनं सर्वं, मन्दिराज्जिष्णुश्रेष्ठिनः । कस्मिंश्चित् सदने शून्ये, मुक्तं तेन सुपर्वणा ॥ ३७१ ॥ प्रगे श्रेष्ठी समुत्थाय, यावद्विवेश मन्दिरम् । तावद्ददर्श तं रिक्तं, धनधान्यादिभिस्तदा ॥ ३७२ ॥ यावच्चिन्तितवान् जिष्णुः, क्व गतं मे धनं रहः । तावत्कश्चिन्नरोऽभ्येत्य, प्रोवाचेति तदग्रतः ॥ ३७३ ॥ उद्वसिते गृहे सर्वं, धनं त्वद्धनसंनिभम् । विद्यते श्राक् त्वमागच्छ, दर्शयामि स्म ते स्फुटम् ॥ ३७४ ॥ तेन सार्धं गृहे तस्मिन् गत्वा कमलनन्दनः । विलोकयन् धनं सर्वं, प्रोवाचेति तदग्रतः ॥ ३७५ ॥ इदं धनं मदीयं न, प्रतिभातीति मे मनः । ततस्तेन नरेणैवं, गदितं तत्पुरः स्फुटम् ॥ ३७६ ॥ धनस्यास्य न कोऽप्यस्ति, स्वामी कमलनन्दन ! । कथङ्कारं ततो नैव, गृहाणत्वमिदं धनम्

॥ ३७७ ॥ ततः प्रोवाच कमलनन्दन इति तं प्रति । कूटमुक्त्वा कदा प्राणात्ययेऽपि लामि नो धनम् ॥ ३७८ ॥ ततो जिष्णुरखिन्नात्मा, जगाम निजमन्दिरम् । कृतार्चनो जिनेन्द्रस्य, भोजनं चकृवान् पुनः ॥ ३७९ ॥ यतः—“ संपदि यस्य न हर्षो, विपदि न विषादो रणे च धीरत्वम् । तं भुवनत्रयतिलकं, जनयति जननी सुतं विरलम् ॥ १ ॥ ” संध्यायां विधिना कृत्वा, प्रतिक्रमणकर्म च । स्मरन् पञ्चनमस्कारं, सुष्वाप कमलाङ्गजः ॥ ३८० ॥ आगत्य स नरो भूयो, जिष्णुं प्रति जगाविति । जिष्णो ! त्वं किमु जागर्षि, नवेति कथयाचिरात् ॥ ३८१ ॥ ततो जिष्णुरुवाचैवं, जागर्म्येवाधुना नर ! । ततस्तेन नरेणेति, प्रोक्तं जिष्णुं प्रति स्फुटम् ॥ ३८२ ॥ ममेदं धनमित्युक्त्वा, यदि त्वं नैव लास्यसि । तदा कुटुम्बकं त्वत्कं, सर्वमेव मरिष्यति ॥ ३८३ ॥ जिष्णुरित्थं तमाचष्ट, भो ! भो ! नरशिरोमणे ! । ममैव सकुटुम्बस्य, यदि स्यान्मरणं ध्रुवम् ॥ ३८४ ॥ तथाप्यहमिदं वाक्यं, जल्पिष्यामि न कर्हिचित् । यद्भाव्यं तद्भवत्येव, जीवानां निजकर्मणा ॥ ३८५ ॥ नररूपं ततस्त्यक्त्वा, सुररूपं विधाय च । उवाचेति सुरो जिष्णुं, तदा मधुरया गिरा ॥ ३८६ ॥ अहं सुरालयादागां, चिकीर्स्तव परीक्षणम् । सत्यवादाच्च नैव त्वं, चलितोऽसि नरोत्तम ! ॥ ३८७ ॥ तुष्टेन तेन देवेन, सप्रभावं मणिद्वयम् । वितीर्णं जिष्णवे पुंसां, साहसात्किं न सिद्ध्यति ? ॥ ३८८ ॥ तद्धनं त्वद्गृहे सर्वमागतं विद्धि सांप्रतम् । इत्युक्त्वाऽथ तिरोऽभूतो, देवो विद्युदिवाचिरात् ॥ ३८९ ॥ यतः—“ धर्माज्जन्म कुले शरीरपटुता, सौभाग्यमायुर्बलं, धर्मेणैव भवन्ति निर्मलयशो, विद्यार्थसंपत्तयः । कान्ताराच्च महाभयाच्च सततं, धर्मः परित्रायते, धर्मः सम्यगुपासितो हि भवति, स्वर्गापवर्गप्रदः ॥ १ ॥ ” ततो धर्मपरो जिष्णुर्मणियुग्मेन सन्ततम् । उपकारान् बहून् चक्रे, रुग्दोषादिहरान् जने ॥ ३९० ॥ यतः—“ अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधम् । अनाथा पृथिवी नास्ति, आम्नायाः खलु दुर्लभाः ॥ १ ॥ ” जिनालयान् बहूनभ्रंलिहान् धर्मालयानपि । विम्बानि च जिनेन्द्राणां, चकार कमलाङ्गजः ॥ ३९१ ॥ मेलयित्वा बहु संघं, जिष्णुः श्रेष्ठी सविस्त-

रम् । शत्रुञ्जयादितीर्थेषु, यात्राश्च बहुधाऽकरोत् ॥ ३९२ ॥ त्रिःसंध्यं स जिनेशस्य, करोति स्मार्चनं मुदा । द्विर्वारं च चकारावश्यकं कर्म निरन्तरम् ॥ ३९३ ॥ कालेन कियता तस्य कुर्वतो धर्ममर्हतः । बभूव नन्दनो वर्यः, सोमाह्वः सोमसंनिभः ॥ ३९४ ॥ क्रमेण नन्दनः सोमो, जिष्णुना परिणायितः । समुद्रश्रेष्ठिनः पुत्रीं कमलाह्वां मनोहराम् ॥ ३९५ ॥ अथान्त्यसमये जिष्णुः, श्रेष्ठी त्यक्त्वाऽशनादिकम् । ध्यायन् जिनं मृषावादत्यागात्स्वर्गे सुरोऽजनि ॥ ३९६ ॥ ततश्च्युत्वा दिवो मर्त्यभवं प्राप्यातिदुर्लभम् । कृत्वा कर्मक्षयं मुक्तिपुरीं चासादयिष्यति ॥ ३९७ ॥ निशम्येति गुरोर्वाणीविस्तरं शिवशर्मदम् । धर्मे लीनमनाः पुण्यधनोऽभूत्स विशेषतः ॥ ३९८ ॥ शीलसेनं गुरुं नत्वा, स्तुत्वा च सुन्दरैः स्तवैः । गुणादानपरः पुण्यधनः स्वगृहमीयिवान् ॥ ३९९ ॥ सविशेषं ततः पुण्यधनः पुण्यमनारतम् । कुर्वाणः क्षणवत्कालं कियन्तं नयति स्म च ॥ ४०० ॥ सुखेन सुप्तयाऽन्येद्युः, स्वप्ने पद्मश्रिया मुखे । प्रविशन् पूर्णिमाचन्द्रो, निशीथिन्यां विलोकितः ॥ ४०१ ॥ प्रगे पद्मश्रिया प्रोक्तं, स्वप्नवृत्तं नृपाग्रतः । नृपेणोक्तं ततस्तस्यै, भविष्यत्यावयोः सुतः ॥ ४०२ ॥ प्रपूर्णदोहदा पूर्णमासा स्वस्थितमानसा । सुतं सूते स्म पद्मश्रीर्मार्तण्डमिव पूर्वदिग् ॥ ४०३ ॥ गीतनृत्यादिभिः कृत्वोत्सवं पुण्यधनो नृपः । नन्दनाय ददौ नाम, जिनदास इति स्फुटम् ॥ ४०४ ॥ तथा कलाः कलाः सर्वा, ग्राहिता भूभुजा सुतः । यथा ख्यातिर्मगाल्लोके, सर्वत्रापि लसद्गुणैः ॥ ४०५ ॥ यतः—" प्रथमे नार्जिता विद्या, द्वितीये नार्जितं धनम् । तृतीये नार्जितो धर्मश्चतुर्थे किं करिष्यति! ॥ १ ॥ आहारनिद्राभयमैथुनानि, सामान्यमेतत्पशुभिर्नराणाम् । विद्याविशेषः खलु मानुषाणां, विद्याविहीनाः पशवो मनुष्याः ॥ २ ॥ " इतः सिंहपुरः स्वामी, बलीसिंहरथाभिधः । जिनदासगुणान् श्रुत्वाऽऽगत्य भद्रपुरीं तदा ॥ ४०६ ॥ सौभाग्यमञ्जरीं पुत्रीं, जिनदासाय सद्धिये । ददौ महोत्सवं कुर्वन्, चित्रकृद् गुसदामपि ॥ ४०७ ॥ युग्मम् ॥ अथ पुण्यधनस्याम्बा, शीलमाला शुभाशया । पुण्यानि बहुशः कृत्वा, जगाम त्रिदशालयम् ॥ ४०८ ॥ दध्यौ पुण्यधनो भूरिभासादा

भूमिभूषकाः। मया च मम पित्रा च कारिता उपलैः पुरा॥ ४०९॥ स्फटिकाश्ममयं नैकं कारितं जिनमन्दिरम्। येन स्यान्मम राज्यश्रीर्निर्मला स्फटिकाश्मवत्॥ ४१०॥ तस्मादहं जिनेन्द्रस्य प्रासादं स्फटिकाश्मभिः। कारयिष्यामि पूर्मध्ये कैलासाचलसोदरम्॥ ४११॥ त्रिभिर्विशेषकम्॥ प्रोवाच सचिवः स्वामिन्नर्हत्स्फटिकसद्मनि। द्रव्यव्ययो बहुर्भावीत्येवं चिन्तय चेतसि॥ ४१२॥ भूपतिः प्राह न ह्येतद्युक्तं कृपाम्बुकर्षणात्। रक्षिताऽपि रमा याति रत्नार्कश्रेष्ठिनो यथा॥ ४१३॥ तथाहि—अर्जयित्वा धनं केचिन्न्यासीकृत्यावनौ निजम्। रत्नार्क इव दुःखी स्याज्जनः श्रीगमनादिह॥ ४१४॥ आसीत् सूर्यपुरे भूमिभामिनीभालभूषणे। धनवान् खलु रत्नार्कश्रेष्ठी कृपणमण्डनम्॥ ४१५॥ यतः—“दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य। कृपणस्य कृपाणस्य केवलमाकारतो भेदः॥ १॥” रत्नार्क एकदा पुत्रं वाचिकं प्रोचिवानिति। छन्नं धनं कियद्भूमौ क्रियते सुखहेतवे॥ ४१६॥ व्यवहारोचितादन्यो विभवः क्वापि कानने। गुप्तो विधीयते वत्स! विपद्रक्षाकृते ननु॥ ४१७॥ यतः—“वरं रेणुर्वरं भस्म नष्टश्रीर्न पुनर्नरः। मुक्त्वैनं दृश्यते पूजा क्वापि पर्वणि पूर्वयोः॥ १॥” चिन्तयित्वेति तौ रात्रौ लात्वा द्युम्नं गतौ वनम्। यत्र न श्रूयते शब्दः पक्षिणामपि कुत्रचित्॥ ४१८॥ न्यासीकर्तुं ततो यावत्प्रकटीकुरुते धनम्। रत्नार्कस्तावदाहेत्यधीरं नन्दन! मे मनः॥ ४१९॥ व्याप्ता वसुन्धरा धूर्तैः परद्रव्यापहारकैः। प्राणेभ्यो वल्लभं द्युम्नं द्रव्यनाशे यतो मृतिः॥ ४२०॥ ततः पुत्र! वनं भ्रान्त्वा विलोकय नरादिकम्। येन न्यासीकरोम्येष धनं निःशङ्कमानसः॥ ४२१॥ प्रतिपद्य ततो वाचं जनकस्य वनेऽभ्रमत्। श्वासोच्छ्वासादिना रिक्तं नरमेकं ददर्श च॥ ४२२॥ आगत्य च पितुः पार्श्वं तेनेति कथितं तदा। श्वासादिरहितो ह्येकः पतितोऽस्ति नरः स्फुटम्॥ ४२३॥ तच्छ्रुत्वा जातशङ्कस्तु श्रेष्ठी चिन्तितवानिति। कश्चिन्मम धनाकाङ्क्षी नरो जीवन्मृतोऽभवत्॥ ४२४॥ यतः—“मृतानामपि धूर्तानामनल्पः स्यात्पराक्रमः। नीतोऽपि निधनं सूतः किं न स्यात्स्वर्णसिद्धिकृत्?॥ ४२८॥” मा-

यया गुप्तवेषोऽपि, धूर्तो व्यसनदायकः । तनोति मरणं किं न, भोजनान्तः स्थितं विषम्? ॥ ४२६ ॥ ततः क्षुरिकया तस्य, छिन्द्धि त्वं श्र-
वणद्वयीम् । यथा वेत्सि परीक्षां त्वं, परासोर्जीवतोऽथवा ॥ ४२७ ॥ तथैव कुर्वता तेन, प्रतिपद्य पितुर्वचः । न मनाक् चलितो द्रव्याकाङ्क्षी
श्रवणकर्तनात् ॥ ४२८ ॥ तथाकृतेऽपि मेने न, श्रेष्ठी तस्य परासुताम् । पुत्रं प्राह पुनः शङ्का, न याति मम मानसात् ॥ ४२९ ॥ यतः—
" लुब्धास्त्यजन्ति द्रव्यार्थं, प्राणानपि विचेतनाः । श्रवणच्छेदने तेषां, किं कष्टं विद्यते ननु ? ॥ १ ॥ " मृत्युप्रतीत्यै पुत्रोऽस्य, वदते घ्राणक-
र्तनम् । अङ्गीकृत्य पितुर्वाक्यं, घ्राणच्छेदाय जग्मिवान् ॥ ४३० ॥ न मनाग् घ्राणच्छेदेऽपि चलितो मायिकः पुमान् । यतो धनं विना नैव
सघ्राणो हि विराजते ॥ ४३१ ॥ कण्ठच्छेदावधिं नाहं, वक्ष्ये दध्याविदं स च । घ्राणहीनोऽप्यकर्णोऽपि, द्रव्येणैव विभासते ॥ ४३२ ॥ ना-
शाविनाशान्निःशङ्कं, न्यासीकृत्य धनं तदा । निर्विकल्पौ गृहं गत्वा, तस्थतुः सुखतश्च तौ ॥ ४३३ ॥ यतः—" क्षत्राणां हयशस्त्रबन्दिषु भवे-
द्द्रव्यव्ययः प्रायशो, भूम्यां च कृपणात्मनां व्यसनिनां, स्त्रीद्यूतचौर्यादिषु । शृङ्गारे पण्ययोषितां च वणिजां, पण्ये कृषौ क्षेत्रिणां, पापानां मधु-
मांसयोः सुकृतिनां, धर्मोपकारोत्सवे ॥ १ ॥ " धूर्तस्तत्र समागत्य, ललौ तस्याखिलं धनम् । तस्मिन्नेव पुरे द्रव्यं, वेश्यासु व्ययति स्म सः
॥ ४३४ ॥ यतः—" मूढा लक्ष्मीं समासाद्य, छलछद्मपराः सदा । सप्तसु व्यसनेष्वेव, व्ययन्ति स्म न संशयः ॥ १ ॥ " उत्पन्नकृत्य रत्नार्कं,
एकदा धनहेतवे । गतस्तत्र च गर्तां च, द्रव्यरिक्तां निरीक्षते ॥ ४३५ ॥ मुमूर्च्छ धनलोभेन, स रुरोद पुनः पुनः । अहो ! दुःखार्जितं द्रव्यं
दैवेनापहृतं मम ॥ ४३६ ॥ प्रलब्धचेतनः श्रेष्ठी, चिन्तयामास चेतसि । जाने स एव लूनाङ्गो, ललौ मम धनं ननु ॥ ४३७ ॥ विलोकया-
म्यहं पुर्यां, सर्वत्राविश्रमं ततः । कदाचिच्चटते हस्ते, मामके स पुमान् खलु ॥ ४३८ ॥ ततो विकलतां कृत्वा, भ्रममाणः पुरान्तरे । तं च तथा-
विधं वेश्यागृहेऽपश्यद्वणिग्वरः ॥ ४३९ ॥ धारयित्वा तलारक्षैरानीय तं नृपान्तिके । रत्नार्क ऊचिवानेवं, पूत्कुर्वन्नुच्चनिस्वनम् ॥ ४४० ॥

वसताऽस्मिन् पुरे स्वामिन् ! मदीयं द्रविणं बहु । अनेन दुष्टचित्तेन, स्तेनेन जगृहे रहः ॥ ४४१ ॥ नृपपृष्टो हसन् धूर्तः, प्राह नाहमलां मुधा ।
मयाऽस्मै नासिकाकर्णौ, दत्त्वैवाऽऽत्तं धनं ननु ॥ ४४२ ॥ नृपेणोक्तं कथं धूर्त ! वक्त्येवं सांप्रतं ननु । इत्युक्ते धूर्तराड् भूमीपतेरग्रे न्यधादि-
दम् ॥ ४४३ ॥ उत्तार्य शीर्षतो वस्त्रं, जवाद् धूर्तशिरोमणिः । अदर्शयत् शिरो राज्ञे, जाङ्गुलीफलसंनिभम् ॥ ४४४ ॥ मह्यं नासे श्रुती
दत्त्वा, गृह्णातु विभवं त्वयम् । नानाविनिमयेनोऽहमगृह्णं द्रविणं ननु ॥ ४४५ ॥ धूर्तेनोक्तं नृपो दृष्ट्वा, धूर्तत्वं निखिलं तदा । हासकोपपरो भूपः,
रत्नार्काय चुकोप च ॥ ४४६ ॥ रे रत्नार्क ! त्वया त्वस्य, गृहीत्वा कर्णनासिके । दत्तं धनं कथङ्कारं, वदसीत्थं मदग्रतः ॥ ४४७ ॥ अल-
ब्धविभवः श्रेष्ठी, जगाम निजमन्दिरम् । धूर्तो लब्धधनश्चैवं, विललास चिरं धनम् ॥ ४४८ ॥ एवं यो मनुजो द्रव्यमर्जयित्वा धनं बहु । न्या-
सीकरोति भूमध्ये, दुःखी रत्नार्कवद्भवेत् ॥ ४४९ ॥ यतः—" दायादाः स्पृहयन्ति तस्करगणा, मुष्णन्ति भूमीभुजो, गृह्णन्ति छलमाकलय्य
हुतभुग्, भस्मीकरोति क्षणात् । अम्भः प्लावयति क्षितौ विनिहितं, यक्षा हरन्ति हठा—द्दुर्वृत्तास्तनया नयन्ति निधनं, धिग् बह्वधीनं धनम् ॥ १ ॥"
एवं निरुत्तरीकृत्य, जल्पन्तं सचिवं नृपः । प्रासादं स्फाटिकं कारयितुमुद्यममादधत् ॥ ४५० ॥ स्फाटिकै रत्नमणिभिः, पुरमध्ये जिनेशितुः ।
प्रासादं कारयामास, भूपः पुण्यधनस्तदा ॥ ४५१ ॥ प्रतिष्ठार्थं यशोभद्रसूरयो दुरितैनसः । नृपेणाकारितास्तत्राऽऽययुः साधुशतान्विताः ॥
४५२ ॥ तदैव बहुदेशेषु, प्रेष्य कुङ्कुमपत्रिकाम् । श्रीसंघो भूरिशः पुण्यधनेनाकारितो मुदा ॥ ४५३ ॥ लग्ने सर्वोत्तमे तत्र, नवीने जिनमन्दिरे ।
मूर्तिं रत्नमयीमाद्यजिनेन्द्रस्य न्यवीविशत् ॥ ४५४ ॥ पुनस्तदा निर्मलनीरपूरितैः, सुवर्णकुम्भैरभिषेककर्मभिः । प्रसूनमालामुकुटोपढौकनैः,
कुलाबलानां विपुलैरुलूलुभिः ॥ ४५५ ॥ मृदङ्गभेरीभरवाद्यझल्लरीप्रभूतसां राविणगर्जदम्बरैः । मुदोज्ज्वलैरुत्सवडम्बरैर्नृपः, स्नात्रं चकाराद्य-
जिनेशितुस्तदा ॥ ४५६ ॥ युग्मम् ॥ सद्भोजनैः सद्वसनैर्मनोहरैर्विभूषणैः सद्वचनादिभिर्भृशम् । श्रीसंघलोकं सकलं महाशयो, महीपतिर्गौरव-

चराश्चकार ॥ ४५७ ॥ यतः—" पुंसां मनोऽनुरोधेन, प्रवर्धन्ते मनोरथाः । भवेद् भूमीविशेषेण, महिमा हि महीरुहाम् ॥ १ ॥ सन्न्यायोपार्जिता लक्ष्मीः, कुलद्वयविवर्धनीः । अन्यायोपार्जिता सैव, कुलद्वयविनाशिका ॥ २ ॥ " ततो नमस्कृत्य युगादिदैवतं, महीपतिं पुण्यधनं च मुन्दरम् । श्रीसंघलोको निखिलं निजं निजं, निकेतनं प्राप सुखप्रयाणकैः ॥ ४५८ ॥ ततः प्रभृति भूमीशस्त्रिसन्ध्यं श्रीजिनेशितुः । अष्टधार्चां करोति स्म, सदा पुण्यधनो नृपः ॥ ४५९ ॥ कृत्वैकदाऽष्टधा पूजां, पुष्पादिभिर्जिनेशितुः । स्तुवतो भूपतेश्चित्तं लयलीनं तथाऽजनि ॥ ४६० ॥ कर्मराशिर्यथा शेषास्त्रुटिता जीर्णवस्त्रवत् । उत्पन्नं केवलं ज्ञानं, लोकालोकप्रकाशकम् ॥ ४६१ ॥ युग्मम् ॥ यतः—" सयं पमज्जणे पुण्णं, सहस्सं च विलेवणे । सयसहस्सिआ माला, अनन्तं गीअवाइए ॥ १ ॥ मणिहन्ति क्षणार्धेन, साम्यमालम्ब्य कर्म तत् । यन्न हन्यान्नरस्तीव्रतपसा जन्मकोटिभिः ॥ २ ॥ कत्थ य जीवो वलिओ, कत्थ य कम्माइं हुंति वलिआइं । जीवस्स य कम्मस्स य पुव्वनिबद्धाइं वेराइं ॥ ३ ॥ कर्म जीवं च संश्लिष्टं, परिज्ञातात्मनिश्चयः । विभिन्नीकुरुते साधुः, सामायिकशलाकया ॥ ४ ॥ " आगत्य तत्क्षणात्स्वर्गान्निर्जरा भक्तिभाविताः । चक्रिरे स्वर्णपाथोजं, विश्वविश्वमनोहरम् ॥ ४६२ ॥ दातुं धर्मोपदेशं तु, ज्ञानी पुण्यधनो मुनिः । यावदारूढवान् देवनिर्मितं स्वर्णवारिजम् ॥ ४६३ ॥ तावच्च तत्क्षणाद्भव्यलोका धर्माभिलाषिणः । श्रोतुकामास्तदा धर्मदेशनामाययुः स्फुटम् ॥ ४६४ ॥ केवलज्ञानसंबन्धं, निशम्य जनकस्य च । जिनदासोऽम्बया युक्तो, विवन्दिषुः समागमत् ॥ ४६५ ॥ ततः पुण्यधनो ज्ञानी, दिदेश धर्मदेशनाम् । सुरासुरनरेशादिसातकोटिप्रदामिति ॥ ४६६ ॥ पूज्यपूजा १ दया २ दानं, ३ तीर्थयात्रा ४ जप ५ स्तपः ६ । श्रुतं ७ परोपकारश्च, ८ मर्त्यजन्मफलाष्टकम् ॥ ४६७ ॥ योजयित्वा करौ मौलौ, जिनदासो जगाविवंति । पूजादीनां फलकथाः, स्वामिन् ! कथय सांप्रतम् ॥ ४६८ ॥ ततः पुण्यधनोऽन्येषामुपकारकृते सताम् । दिदेश विस्तरात्पूज्यपूजादीनां फलं यथा ॥ ४६९ ॥ तथाहि—गुरुप्रसादतः प्राप्य, धर्मं जीवदयात्मकम् ।

धनश्रेष्ठीव लभते, भव्यो भव्यां सुखावलीम् ॥ ४७० ॥ श्रीपुरे श्रीपतेर्मिथ्यादृष्टिनः श्रेष्ठिनोऽभवन् । चत्वारः सूनवः सोमभीमरामधनाभिधाः ॥ ४७१ ॥ चतुर्णामपि पुत्राणां, श्रेष्ठिना दिवि गच्छता। द्विर्द्विः (शत)कोटि सुवर्णानामर्पिताश्च पृथक् पृथक् ॥ ४७२ ॥ चत्वारः श्रीपतेः पुत्रा, अज्ञानवासिताशयाः । स्नानादि कुर्वते धर्मबुद्ध्या स्वःसुखहेतवे ॥ ४७३ ॥ धर्मघोषान् गुरूंस्तत्रागतान् श्रुत्वाऽन्यदा वरान् । वन्दितुं समगाद्द्रव्यलोको धर्माभिलाषुकः ॥ ४७४ ॥ श्रीपतेः श्रेष्ठिनः पुत्राश्चत्वारः कुतुकात्तदा । मिथ्यात्ववासितस्वान्ता, जग्मुः श्रीगुरुसन्निधौ ॥ ४७५ ॥ अथ धर्मोपदेशः—आर्यदेशकुलरूपबलायुर्बुद्धिबन्धुरमवाप्य नरत्वम् । धर्मकर्म न करोति जडो यः, पोतमुज्झति पयोधिगतः सः ॥ ४७६ ॥ श्रूयतां धर्मसर्वस्वं, श्रुत्वा चैवावधार्यताम् । आत्मनः प्रतिकूलानि, परेषां न समाचरेत् ॥ ४७७ ॥ यथा चतुर्भिः कनकं परीक्ष्यते, निघर्षणच्छेदनतापताडनैः । तथैव धर्मो विदुषा परीक्ष्यते, श्रुतेन शीलेन तपोदयागुणैः ॥ ४७८ ॥ कथमुत्पद्यते धर्मः ? कथं धर्मो विवर्धते ? । कथं च स्थाप्यते धर्मः ? कथं धर्मो विनश्यति ? ॥ ४७९ ॥ सत्येनोत्पद्यते धर्मो, दयादानेन वर्धते । क्षमया च स्थाप्यते धर्मः, क्रोधलोभाद्विनश्यति ॥ ४८० ॥ सर्वे वेदा न तत्कुर्युः, सर्वे यज्ञाश्च भारत ! । सर्वे तीर्थाभिषेकाश्च, यत्कुर्यात्प्राणिनां दया ॥ ४८१ ॥ अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । एतेषु पञ्चसूक्तेषु सर्वे धर्माः प्रतिष्ठिताः ॥ ४८२ ॥ अहिंसालक्षणो धर्मोऽधर्मस्तु प्राणिनां वधः । तस्माद्धर्मार्थिना वत्साः, कर्तव्या प्राणिनां दया ॥ ४८३ ॥ यूपं कृत्वा पशून् हत्वा, कृत्वा रुधिरकर्दमम् । यद्येवं गम्यते स्वर्गे, नरके केन गम्यते ? ॥ ४८४ ॥ भारते शान्तिपर्वणि प्रोक्तम्—"ये रात्रौ सर्वदाहारं, वर्जयन्ति सुमेधसः । तेषां पक्षोपवासस्य, फलं मासेन जायते ॥ ४८५ ॥ सत्यं तीर्थं तपस्तीर्थं, तीर्थमिन्द्रियनिग्रहः । सर्वभूतदयातीर्थमेतत्तीर्थस्य लक्षणम् ॥ ४८६ ॥ आत्मा नदी संयमतोयपूर्णा, सत्या वहा शीलतटा दयोर्मिः । तत्राभिषेकं कुरु पाण्डुपुत्र ! । न वारिणा शुध्यति चान्तरात्मा ॥ ४८७ ॥ चित्तस्यान्तर्गतं पापं, तीर्थस्नानैर्न शुद्ध्यति । शतशोऽपि जलैर्धौतं, सुराभाण्डमिवाशुचि ॥ ४८८ ॥ संवत्सरेण यत्पापं

कैवर्तस्य च जायते । एकाहेन तदाप्नोति अपूतजलसंग्रही ॥ ४८९ ॥ षड्त्रिंशदङ्गुलायामं, विंशत्यङ्गुलविस्तृतम् । दृढं गलनकं कुर्याद्, भूयो जीवान् विशोधयेत् ॥ ४९० ॥ म्रियन्ते मिष्टतोयेन, पूतराः क्षारसंभवाः । क्षारतोयेन तु परे, न कुर्यात् संकरं ततः ॥ ४९१ ॥ लूतास्यतन्तु पतिते, ये बिन्दौ सन्ति जन्तवः । सूक्ष्मा भ्रमरमानास्ते, नैव मान्ति त्रिविष्टपे ॥ ४९२ ॥ इति तीर्थाधिकारे भारते । कूपेषु अधमः स्नानं, वाप्यां स्नानं च मध्यमम् । तडागे वर्जयेत्स्नानं, नद्यां स्नानं न शोभनम् ॥ ४९३ ॥ गृहे चैवोत्तमं स्नानं, जलं चैवं तु शोधितम् । तथा त्वं पाण्डवश्रेष्ठ ! गृहे स्नानं समाचर ॥ ४९४ ॥ एकादशीपुराणे च ॥ चत्वारो नरकद्वाराः, प्रथमं रात्रिभोजनम् । परस्त्रीगमनं चैव, संधानानन्तकायिके ॥ ४९५ ॥ अस्तं गते दिवानाथे, आपो रुधिरमुच्यते । अन्नं मांससमं प्रोक्तं, मार्कण्डेन महर्षिणा ॥ ४९६ ॥ भारते योगशास्त्रेऽप्युक्तम् ॥ उलूककाकमार्जारगृध्रसंबरशूकराः । अहिवृश्चिकगोधाश्च, जायन्ते रात्रिभोजनात् ॥ ४९७ ॥ ताराध्वतारातटिनीभुजङ्ग तरङ्गगङ्गासिकताकणानाम् । संख्यां स कृत्वा कुरुतां तु धर्मं यो धर्ममीप्सुः कृतकृत्यगेहः ॥ ४९८ ॥ देशनान्ते च लघुना, धनेन श्रेष्ठिसूनुना । श्राद्धधर्मो लले तेन, विशुद्धोऽन्यैश्च मानवैः ॥ ४९९ ॥ यतः—" आसन्नपरमपए, पावेअव्वंमि सयलकल्लाणे । जीवो जिणिंदभणिअं, पडिवज्जइ भावओ धम्मं ॥ १ ॥ " अन्यदा दैवयोगेन, धनस्य कुर्वतो वृषम् । त्रुटिताः कमलाः सर्वाः, पूर्वं पित्रर्पिता द्रुतम् ॥ ५०० ॥ यतः—" संपदो जलतरङ्गविलोला, यौवनं त्रिचतुराणि दिनानि । शारदाभ्रमिव चञ्चलमायुः, किं धनैः कुरुत धर्ममनिन्द्यम् ? ॥ १ ॥ " चला विभूतिः क्षणभङ्गि यौवनं, कृतान्तदन्तान्तरवर्ति जीवितम् । तथाऽप्यवज्ञा परलोकसाधने, अहो ! नृणां विस्मयकारि चेष्टितम् ॥ २ ॥ " जल्पन्तीति जनाः केचित्त्यक्त्वाऽऽशुपैतृकं क्रमम् । जिनधर्मरतोऽभूस्त्वं, तेन ते कमला गताः ॥ ५०१ ॥ अनादृत्य वचः सर्वजनानां स विशेषतः । जिनधर्मं करोत्येव, स्वर्गादिसुखदायकम् ॥ ५०२ ॥ यतः—" सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः ? । विद्यते स न हि कश्चिदु-

पायः सर्वलोकपरितोषकरो यः ॥ १ ॥" जिनेन्द्रगुरुपादानां, कुर्वन् भक्त्याऽर्चनं सदा। धनोऽदीनमना धर्मं, जिनोक्तं कुरुते भृशम् ॥५०३॥ यतः—"कार्यः संपदि नानन्दः पूर्वपुण्यभिदे हि सा। नैवापदि विषादः स्यात्सा हि प्राक् पापपिष्टये ॥ १ ॥" गृहीतः पौषधोऽन्येद्युर्मध्याह्ने नगराद्बहिः। हरेर्दिशि मलोत्सर्गं, कर्तुकामो ययौ धनः ॥ ५०४ ॥ तत्र वटस्य वामाङ्गे, मलोत्सर्गं च कुर्वता। हस्तेन लिखिता भूमिं, धनेन पस्पृशे निधिः ॥ ५०५ ॥ दध्यौ धनो ग्रहिष्यामि, यदि स्वयमहं निधिम्। तृतीयव्रतभङ्गो मे, भविष्यति तदाऽचिरात् ॥ ५०६ ॥ यतः—"कारुन्नरुन्नसिंगरभावभयजीविअंतकरणेहिं। साहू अ चिअ मरंती नय निअनियमं विराहंति ॥ १ ॥" विचिन्त्येति निधिं धूल्याऽऽच्छाद्य लात्वा जलं धनः। आगत्य धर्मशालायां, धर्मकार्याण्यचीकरत् ॥ ५०७ ॥ पौषधं पारयित्वैत्य, गृहे रात्रौ स्वपन् धनः। स्मृत्वा निधिस्वरूपं तं, सर्वं प्राह प्रियाग्रतः ॥ ५०८ ॥ पत्नी प्राह कथं मूर्ख! नानीतोऽत्र निधिस्त्वया। धनः प्रोवाच नियमभङ्गो भवति मे प्रिये! ॥ ५०९ ॥ भार्याजगावपत्यानि, विसीदन्त्यावयोर्भृशम्। यथाऽस्ति नियमो मूर्ख! तव मेऽत्र तथा नहि ॥ ५१० ॥ तेन तत्स्थानकं कान्त! दर्शय त्वं ममाचिरात्। येनानीय निधिं सर्वं, जीवयामि कुटुम्बकम् ॥ ५११ ॥ दम्पत्योः कुर्वतोर्वार्तां, पूर्वदृष्टां च तां तदा। श्रुत्वा स्तेनैर्मिथः पूर्वप्रविष्टैरिति चिन्तितम् ॥ ५१२ ॥ यतः—तैलं नास्ति घृतं नास्ति, नास्ति मुद्गयुगन्धरी। खवार्थं लवणं नास्ति, तन्नास्ति यद्धि भुज्यते ॥ ५१३ ॥ एतद्विचिन्त्य ते चौरा, मुक्त्वा तं सदनं जवात्। तस्मिन् वटे ययुर्हृष्टा, वार्तयन्तः परस्परम् ॥ ५१४ ॥ हस्तक्षेपान्मलोत्सर्गस्थानं मत्वा मलिम्लुचाः। पश्चात्कृत्य रजो यावद्धस्तक्षेपं वितन्वते ॥ ५१५ ॥ तावत्ते वृश्चिकैर्दष्टाः, प्रोचुरेवं परस्परम्। अहो! वणिग् महाधूर्तो, येनेत्थं वाहिता वयम् ॥ ५१६ ॥ ततस्तेना जगुस्तस्य, सदने क्षिप्यते इदम्। यतश्च वृश्चिकैः सर्वं, कुटुम्बं भक्ष्यते द्रुतम् ॥ ५१७ ॥ विचिन्त्येति तदा तस्य, समागत्य निकेतनम्। आच्छादनतृणान्यांशुः, पश्चाच्चक्रुर्मलिम्लुचाः ॥ ५१८ ॥ प्रक्षिपन्तो निधिं चौरा, वृश्चिकभ्रान्ति-

तो जगुः । एतत्कुटुम्बकं प्सात प्सात वृश्चिकाः ! भो ! ॥ ५१९ ॥ श्रुत्वैनद्वचनं तेषामुत्थितो यावता धनः। तावन्मलिम्लुचा नेशुः, प्रोवाचेति धनस्ततः ॥ ५२० ॥ उत्तिष्ठोत्तिष्ठ भो भार्ये ! प्रदीपं कुरु वेगतः । गृहिण्योक्तं कथं कुर्वे, दीपं तैलमृते पते !॥५२१॥ बहुकालादंपत्यानि, रुक्षान्न भुञ्जते सदा । विलोक्यतेऽधुना मूर्ख ! भवतः कज्जलध्वजः ॥ ५२२ ॥ ततः स्वयं समुत्थाय, प्रातिवेश्मकमन्दिरात् । चकार तैलमानीय, दीप यावद्धनो वणिग् ॥ ५२३ ॥ तावद्ददर्श दीनारपुञ्जं प्रौढं गृहान्तरे । प्रोवाच पत्निं उत्तिष्ठोत्तिष्ठेतश्च विलोकय ॥ ५२४ ॥ जिनधर्मप्रसादेन, स्वकीयसदने स्वयम् । समागतो निधिः स्वर्णकोटिद्वयसमन्वितः ॥ ५२५ ॥ यतः—"धर्मो दुःखदवानलस्य जलदः, सौख्यैकचिन्तामणि–र्धर्मः शोकमहोरगस्य गरुडो, धर्मो विपत्त्रायकः । धर्मः प्रौढपदप्रदर्शनपटुर्धर्मोऽद्वितीयः सखा, धर्मो जन्मजरामृतिक्षयकरो, धर्मो हि मोक्षप्रदः ॥ १ ॥" ततः प्रिया समुत्थाय, तत्रैत्य निधिमीक्ष्य च । हृष्टाऽऽह प्रिय जीवेति, चिरं धर्मप्रसादतः ॥ ५२६ ॥ ततस्तैः कलशान् भृत्वा, निक्षिप्य रहसि द्रुतम् । दीनारैः कतिभिश्चक्रे, धनो देवार्चनादिकम् ॥ ५२७ ॥ ततःप्रभृति सततं, लक्ष्मीस्तस्य निकेतने । पूर्वपुण्योदयाद् वृद्धिमापाब्धिरिव चन्द्रतः ॥ ५२८ ॥ भ्रातुः संयोगतस्त्यक्त्वा, मिथ्यात्वं बान्धवास्त्रयः। धर्मे श्रीजिननाथोक्ते, लग्ना जीवदयापराः ॥ ५२९ ॥ शत्रुञ्जयादितीर्थेषु, यात्रां कुर्वन् सदुत्सवम्। कमलां सफलीचक्रे, धनश्रेष्ठी तदा मुदा ॥ ५३० ॥ यतः—"आरम्भाणां निवृत्तिर्द्रविणसफलता संघवात्सल्यमुच्चै–र्नैर्मल्यं दर्शनस्य प्रणयिजनहितं, जीर्णचैत्यादिकृत्यम्। तीर्थोन्नत्यप्रभावं जिनवचनकृतिस्तीर्थकृत्कर्मकत्वं, सिद्धेरासन्नभावः सुरनरपदवी, तीर्थयात्राफलानि ॥ १ ॥" ततः प्रवर्धमानश्रीर्धनो धर्मपरायणः। प्रपाल्य नियमान् स्वर्गं, जगामानघमानसः॥ ५३१ ॥ च्युत्वा ततो दिवो मर्त्यभवं प्राप्य धनः पुनः । क्षिप्त्वा कर्माखिलं मुक्तिसातमासादयिष्यति ॥ ५३२ ॥ मिथ्यात्वं धनवत्त्यक्त्वा, धर्मं कुर्वन्ति ये जनाः । लभन्ते ते लसत्सौख्यसंततिं नितमां रयात् ॥ ५३३ ॥ इति पूज्यपूजागुरुसंगत्या मिथ्यात्वत्यागे धनकथा ॥ १ ॥

ददानोऽखिलजीवेभ्योऽभयदानं सदा पुमान् । लभते संपदं वर्धमानां हीरमहीशवत् ॥ १ ॥ तथाहि—गुञ्जाऽभिधे पुरे लक्षपतिर्लक्षेश्वरी वणिग् । कुर्वन् धनं धनं नांत्ति, शेते नैव सुखं कदा ॥ २ ॥ तस्य लक्ष्मीवती भार्याऽसूत पुत्रं शुभेऽहनि । विनोत्सवं पिता सूनोर्हीर इत्यभिधां व्यधात् ॥ ३ ॥ मनाक् कस्यापि नो दत्ते, दानं कृपणभावतः । न चक्रे च जिनेन्द्रोक्तं, धर्मं कैवल्यशर्मदम् ॥ ४ ॥ यतः—"निर्दयत्वमहङ्कारस्तृष्णा कर्कशभाषणम् । नीचपात्रप्रियत्वं च, पञ्च श्रीसहचारिणः ॥ १ ॥" यवकोद्रवकङ्ग्वादि, धान्यं व्ययति मन्दिरे । न च भित्तिर्गृहे वस्त्रं, जीर्णं परिदधाति सः ॥ ५ ॥ यतः—"कृपणेन समो दाता, न भूतो न भविष्यति । अस्पृष्ट्वाऽथ यतो द्रव्यं, परेभ्यस्तत्प्रयच्छति ॥ १ ॥" अन्येद्युर्भार्यया छन्नमानीय घृतमार्पणात् । पुत्रस्य भाजने मुक्तं, यावत्तावत्स आययौ ॥ ६ ॥ पुत्रामत्रे घृतं दृष्ट्वा, श्रेष्ठी मूर्छामुपेयिवान् । शीतोपचारतःस्वस्थीकृतः कष्टेन भार्यया ॥ ७ ॥ यतः—"अर्थानामर्जने दुःखमर्जितानां च रक्षणे । आये दुःखं व्यये दुःखं, धिग् द्रव्यं दुःखवर्धकम् ॥ १ ॥ हुंतीए हुंति गुणा, जांतीए जंति संतावी । अउ जीसे निसेसगुणा, धन्नाणं जयउ सा लच्छी ॥ २ ॥" पत्न्या प्रोक्तं कथं कान्त ! मूर्छा तव समागता । श्रेष्ठी प्राह गतं सर्वं, धनं सर्पिर्व्ययान्मम ॥ ८ ॥ मत्वेति तनयः प्राहाद्यप्रभृति घृतं मया । जेमनीयं निजे नैव, गेहे कलहसंभवात् ॥ ९ ॥ यतः—"ऋणं व्रणं कलिर्वह्निर्लोभो रोगो मनस्तथा । एतानि वर्धमानानि, प्राणनाशं नयन्त्यहो ! ॥ १ ॥" आकर्ण्य श्रेष्ठीनो मूर्छासंबन्धं प्राणहारकम् । तस्य निकेतने नैव, कोऽप्यागच्छति सज्जनः ॥ १० ॥ मेलयित्वा धनं श्रेष्ठी, अकृत्वा पुण्यसंचयम् । जगाम दुर्गतिं दुष्टध्यानवासितमानसः ॥ ११ ॥ नीत्वा प्रेतवने कृत्वा, तातं चितान्तरे तदा । ददात्यग्निं सुतो यावत्तावद्व्योम्नीति वागभूत् ॥ १२ ॥ लखपति लाकड मांहि, पहिरण विण पउढाडीइ । सरीसउ किंपि न जाइ, धणु माणुस परिअण सयणु ॥ १३ ॥ कुलमंडण कोडिह धणी जो पामइ अवसाणि । धरि अभोषा घालीयइ उली जइ मसाणि ॥ १४ ॥ श्रुत्वा व्योमोद्भवां वाणीं, वैराग्याब्धि-

तमानसः । हीरः सज्जनसंयुक्तो, ददौ दाहं पितुस्तदा ॥ १५ ॥ ततो हीरः कृताशेषपितृकार्योचितक्रियः । अनित्यं द्रविणं मत्वा, बभूव दानतत्परः ॥ १६ ॥ दत्त्वाऽर्थिभ्योऽखिलं द्रव्यं, यावन्निःस्वोऽभवद् वणिग् । तावत्तत्पुरभूपालोऽपुत्रो मृत्युं समीयिवान् ॥ १७ ॥ पञ्चदिव्यप्रयोगेण, प्रधानसचिवादयः । पुरस्य तस्य साम्राज्यं, प्रददुः श्रेष्ठिसूनवे ॥ १८ ॥ यतः—" सुकुलजन्मविभूतिरनेकधा, प्रियसमागमसौख्यपरंपरा । नृपकुले गुरुता विमलं यशो, भवति धर्मतरोः फलमीदृशम् ॥ १ ॥ " दानप्रभावतः प्राप्य, राज्यं प्राज्यं वणिक्सुतः । भृशं चकार दानादि, चतुर्धा धर्ममर्हितम् ॥ १९ ॥ अन्येद्युस्तत्पुरोद्याने, धर्मघोषाभिधान् गुरून् । वन्दितुं भूपतिर्हीरो, ययौ सारपरिच्छदः ॥ २० ॥ अत्रोपदेशः—पूजामाचरतां जगत्रयपतेः, संघार्चनं कुर्वतां, तीर्थानामभिवन्दनं विदधतां, जैनं वचः शृण्वताम् । सद्दानं ददतां तपश्च चरतां, सत्त्वानुकम्पाकृतां, येषां यान्ति दिनानि जन्म सफलं, तेषां सुपुण्यात्मनाम् ॥ २१ ॥ सर्वाः संपत्तयः सत्यं, जायन्ते तस्य जन्मिनः । प्राग्जन्मोपार्जितं यस्य, पुण्यद्रविणमूर्जितम् ॥ २२ ॥ देशनान्ते नृपोऽप्राक्षीद्भगवन् ! केन कर्मणा । ममाभूदीदृशी राज्यलक्ष्मीर्यत्नं विनाऽधुना ? ॥ २३ ॥ गुरुराह—गङ्गायां मात्सिको वीराभिधो मत्स्यान् बहून् भृशम् । मारयित्वा च निःशूको, बभारोदरमात्मनः ॥ २४ ॥ इतो नद्यां समायातो, धरणो धर्मबन्धुरः । निरीक्ष्य मारयन्तं तं, मत्स्यान् प्राहेति सकृपः ॥ २५ ॥ जीवानां ये जनाः प्राणान्, हृत्वा हृत्वा निजोदरम् । भरन्ति स्मोचिरात् श्वभ्रे, ते पतिष्यन्ति दुःखदे ॥ २६ ॥ यतः—शान्तिपर्वणि—" तिलसर्षपमात्रं तु, मांसं यो भक्षयेन्नरः । स एव नरकं याति, यावच्चन्द्रदिवाकरौ ॥ १ ॥ अश्रे वसति रुद्रश्च, मांसे वसति जनार्दनः । शुक्रे वसति ब्रह्मा च, तस्मान्मांसं न भक्षयेत् ॥ २ ॥ " तेन त्वं सर्वथा जीवहिंसां संत्यज मात्सिक ! । यतो जीवावधाज्जीवो, लभते सुखमक्षयम् ॥ २७ ॥ यतः—" मातेव सर्वभूतानामहिंसा हितकारिणी । अहिंसैव हि संसारमरावमृतसारणिः ॥ १ ॥ अहिंसा दुःखदावाग्निप्रावृषेण्यघनावली । भवभ्रमिरुगार्तानामहिंसा परमौषधी ॥

२ ॥ दीर्घमायुः परं रूपमारोग्यं श्लाघनीयता । अहिंसायाः फलं सर्वं, किमन्यत्कामदैव सा ॥ ३ ॥" श्रुत्वेति श्रेष्ठिनः पार्श्वे, मात्सिकोऽभिग्रहं ललौ । अतः परं मया नैव, हन्तव्याः प्राणिनो मनाग् ॥ २८ ॥ ततो नियममाराध्य, मात्सिको भावतः सदा । अन्ते समाधिना मृत्वा, त्वमभूर्भूमिनायकः ॥ २९ ॥ धरणः श्रावको धर्मं, जैनं कृत्वा सदादरात् । मृत्वान्ते निर्जरः स्वर्गेऽजनि भासुरदेहभाग् ॥ ३० ॥ एत्य पूर्वभवस्नेहाद्राथे मोत्त्वाम्बरस्थितः । अदृश्याङ्गो ददौ राज्यं, तुभ्यं धरणनिर्जरः ॥ ३१ ॥ आकर्ण्यैतन्नृपो नत्वा, गुरूनेत्य निजालये । अमारिं घोषयामास, सकृपो निजनिर्वृति ॥ [illegible] ॥ श्रीसुन्दरीप्रियोद्भूतं, नन्दनं सुन्दराभिधम् । राज्ये न्यस्याकरोदष्टाह्निकां श्रीजिनसद्मनि ॥ ३३ ॥ आराध्य विधिना धर्मं, स्मरन् पञ्चनमस्कृतिम् । मृत्वाऽभवत्सुरो हीरभूपोऽच्युतसुरालये ॥ [illegible] ॥ च्युत्वा ततो हीरसुरः सुरालयाल्लब्ध्वा नृजन्मानघमद्भुते कुले । क्षीप्त्वाऽष्टकर्मप्रचयं गमिष्यति, श्रेयःपुरेऽनन्तसुखौघदायके ॥ ३५ ॥ एवं यो मनुजो जीवरक्षां वितनुतेतराम् । अष्टकर्मक्षयं कृत्वा, स यास्यति शिवालये ॥ ३६ ॥ इति दयायां हीरभूपालकथा ॥ [illegible] ॥

शुद्धमार्गार्जितां लक्ष्मीं, सप्तक्षेत्र्यां वपन् भवी । प्रतिष्ठां लभते शिष्टां, युधिष्ठिरनरेन्द्रवत् ॥ ३७ ॥ तथाहि—हस्तिनागपुरे न्यायमार्गस्थः श्रीयुधिष्ठिरः । कुर्वन् राज्यं करोति स्म, धर्मं सर्वज्ञभाषितम् ॥ ३८ ॥ एकदा सदनस्थोऽवग्, युधिष्ठिरनृपो रहः । आकार्य भीमपार्थादीन् सोदरानिति भक्तितः ॥ ३९ ॥ स्वकीयसदने लक्ष्मीर्विद्यते भूयसी किल । स्थाने नियोजनेनैव, स्थाप्यतेऽक्षयहेतवे ॥ ४० ॥ यतः—"सुस्थाने स्थापिता लक्ष्मीर्न्यायमार्गार्जिता किल । स्थिरीभवति या चन्द्रविनिर्जरशैलवत् ॥ १ ॥" भीमः प्रोवाच भो भ्रातः ! मम लक्ष्मीं समर्पय । यथा सुस्थानके यत्नात्, स्थापयामि रहोऽचिरात् ॥ ४१ ॥ भ्रात्रर्पितां श्रियं वह्वीं, लात्वा भीमस्तदा द्रुतम् । कस्मिंश्चिद्विपिने यातो, दूरतोऽचलसंनिधौ ॥ ४२ ॥ उत्पाट्योद्रिमधस्तस्य, स्थापयित्वाऽखिलां रमाम् । रहो यत्नात् मुदं तन्वन्, भीमोऽगाद् भ्रातृसंनिधौ ॥ ४३ ॥

युधिष्ठिरो जगौ भ्रातः ! कुत्र श्रीः स्थापिता त्वया ? । भीमः माह महीध्रस्योधस्तान्न्यस्ता मया किल ॥ ४४ ॥ युधिष्ठिरो जगौ भ्रातस्तत्र ह्री स्थापिता रमा । जायते न स्थिराभूरिविघ्नसन्ततिसंभवात् ॥ ४५ ॥ यतः–" अधः क्षिपन्ति कृपणा, वित्तं तत्र यियासवः। सन्तश्च गुरुचैत्यादौ, तदुच्चैःफलकाङ्क्षिणः ॥ १ ॥" भीमः मोवाच भो भ्रातः ! कथं लक्ष्मीः स्थिरा भवेत् ? । धर्मपुत्रो जगौ दानाज्जायते श्रीः सुनिश्चला ॥ ४६ ॥ यतः–"सुक्षेत्रे वापयेद्बीजं, सुपात्रे वापयेद्धनम् । सुक्षेत्रे च सुपात्रे च प्रयुक्तं नैव नश्यति ॥ १ ॥ ज्ञानवान् ज्ञानदानेन, निर्भयोऽभयदानतः । अन्नदानात्सुखी नित्यो, निर्व्याधिर्भेषजाद्भवेत् ॥ २ ॥" भीमोऽवग् न कथं दत्ता, क्षीयते कमला किल? युधिष्ठिरो जगौ लक्ष्मीर्वितीर्णा भूयसी भवेत् ॥ ४७ ॥ यतः–मा मंस्थाः क्षीयते वित्तं, दीयमानं कदाचन । कूपारामगवादीनां, ददतामेव संपदः ॥ ४८ ॥ श्रुत्वैतच्छ्रियमानीय, भीमो भ्रातृवचोरतः । मण्डयित्वा महासत्रं, लक्ष्मीव्ययपरोऽजनि ॥ ४९ ॥ कर्कशं वचनं जल्पन्, कालातिक्रमणादिभिः । याचकेभ्यो ददौ दानं, भूरिशश्च वृकोदरः ॥ ५० ॥ तथा दानं ददानं तं, भीमं दृष्ट्वा युधिष्ठिरः । प्राहेत्थं श्रीः स्थिरा नैव, जायते दानदूषणात् ॥ ५१ ॥ यतः–" अनादरो विलम्बश्च, वैमुख्यं विप्रियं वचः । पश्चात्तापश्च दातुः स्याद्दानदूषणपञ्चकम् ॥ १ ॥" भीमः माह कथं भ्रातः ! दानं च दीयते सदा ?। युधिष्ठिरो जगावित्थं, जायते श्रीश्चिरं स्थिरा ॥ ५२ ॥ आनन्दाश्रूणि रोमाञ्चो, बहुमानः प्रियं वचः । तथाऽनुमोदना पात्रे, दानभूषणपञ्चकम् ॥ ५३ ॥ युधिष्ठिरो जगौ भीम ! रुद्रयक्षान्तिके व्रज । पृष्टो दानस्वरूपं स, तवाग्रे कथयिष्यति ॥ ५४ ॥ अङ्गीकृत्य वचो भ्रातुर्गत्वा यक्षान्तिकेऽद्भुतम् । भीमः पप्रच्छ दानस्य, फलं विनयपूर्वकम् ॥ ५५ ॥ यतः–"विनयं राजपुत्रेभ्यः, पण्डितेभ्यः सुभाषितम् । अनृतं द्यूतकारेभ्यः, स्त्रीभ्यः शिक्षेत कैतवम् ॥ १ ॥ यक्षः माह पुराऽभूवमहं लक्ष्मीपुरे धनी । अदां च स्वर्णरूप्यादि, दानं कर्कशवाक् सदा ॥ ५६ ॥ दत्त्वा सुवर्णरूप्यादि, मृत्वा प्रान्ते ततो भवात् । कटुवाग्दोषतोऽभूवमहमीदृक्षरूपयुक् ॥ ५७ ॥ रत्नदानं स्वर्णदानं, मुखे नाभूत्सु-

भाषितम् । तेनेयं काञ्चनी काया,तेनेदं सौकरं सुखम् ॥ ५८ ॥ श्रुत्वैतद्वचनं भीमः, समेत्य निजसद्मनि । मृदुवाक्यश्च सर्वत्र,दत्ते दानं स-
माहितः ॥ ५९ ॥ ततो भीमं ददानं च,सुवर्णादि तथा यथा । दृष्ट्वा युधिष्ठिरः प्राह,पात्रदाने महत्फलम् ॥ ६० ॥ सैव भूमिस्तदेवाम्भः,
पश्य पात्रविशेषतः । आम्रो मधुरतामेति,तिक्ततां निम्बपादपः ॥ ६१ ॥ पात्रदानप्रभावेण,श्रेयांसशालिभद्रयोः । इहामुत्राऽभवद् भूरिसंपदश्च
पदे पदे ॥ ६२ ॥ ततो युधिष्ठिरादिष्टो,भीमः सुन्दरभावतः । सप्तक्षेत्र्यां धनं भूरि,व्ययित्वा सुखभागभूत् ॥ ६३ ॥ एवं ये भावतो भव्याः,
सुपात्रेषु सदादरात् । ददुर्दानं च ते सद्यो,लभन्ते पदमव्ययम् ॥ ६४ ॥ इति दानविषये युधिष्ठिरभीमकथा ॥ ३ ॥

कुर्वाणः सततं तीर्थयात्रां भावान्वितो भवी । धीरवल्लभते सद्यो,मञ्जुलां सुखसंततिम् ॥ ६५ ॥ भीमे पुरे महीशस्य,भीमस्य सुन्द-
री प्रिया । असूत तनये लक्ष्मीवतीपद्माभिधे क्रमात् ॥ ६६ ॥ वर्धमाने सुते पित्रा,पाठिते यत्नतस्तथा । यथा सरस्वतीं देवीं,कलाभिर्जयतो
भृशम् ॥ ६७ ॥ यतः—" जले तैलं खले गुह्यं,पात्रे दानं मनागपि । प्राज्ञे शास्त्रं स्वयं याति,विस्तारं वस्तुशक्तितः ॥ १ ॥ ज्ञानावरणतो
जीवा,भवेयुर्जडबुद्धयः । ज्ञानानावरणाद्विद्या,विशिष्टा जायते नृणाम् ॥ २ ॥ " कृत्वोत्संगेऽन्यदा पुत्र्यौ,पप्रच्छेति महीपतिः । कस्य प्रभा-
वतः सौख्यं,विद्यते युवयोरिह ॥ ६८ ॥ लक्ष्मीवती जगौ तात ! शर्मास्ति त्वत्प्रसादतः । ततस्तां नृपतिर्भानुभूपाय श्रीपुरे ददौ ॥ ६९ ॥
पद्मा प्रोवाच तात ! स्वपूर्वकर्मनियोगतः । सद्वस्त्राभरणाहारादयः स्युर्मम निश्चितम् ॥ ७० ॥ श्रुत्वैतन्नृपती रुष्टो,जीर्णशाटीवृतां सुताम् ।
धीराभिधाय निःस्वाय,ददौ निर्दयमानसः ॥ ७१ ॥ यतः—"वेश्याऽक्का नृपतिश्चौरनारीमार्जारमर्कटाः । जातवेदाः कलादश्च,निजा न स्युः-
कदाचन ॥ १ ॥ " ततः पद्मावती हृष्टा,पतिं लात्वा पतिव्रता । गत्वा विन्ध्याचलोपान्ते,तस्थौ लक्ष्मीपुरे क्वचित् ॥ ७२ ॥ यतः—" या
सद्धर्मरता विवेककलिता,शान्ता सती सार्जवा,सोत्साहा प्रियभाषिणी सुनिपुणा,सल्लक्षणा सद्गुणा । सद्वृत्ता गृहनीतिविस्मितमुखी,दानो-

न्मुखी सन्मतिः, संतुष्टा विनयान्वितातिसुभगा, श्रीरेव सा स्त्री ननु ॥ १ ॥ " विन्ध्याचलवनस्यान्तर्गत्वा गत्वा निरन्तरम् । पश्चा भर्तृयुताऽऽनीय, काष्ठानि स्म पणायति ॥ ७३ ॥ यतः—" जं चिअ विहिणा लिहिअं तं चिअ परिणमइ सयललोअस्स । इअ जाणेविअ धीरा विहुरे वि न कायरा हुंति ॥ १ ॥ शशिदिवाकरयोर्ग्रहपीडनं, गजभुजङ्गविहङ्गमबन्धनम् । मतिमतां च समीक्ष्य दरिद्रतां, विधिरहो ? बलवानिति मे मतिः ॥ २ ॥ " गृहे तृणमये कोलखनितेऽवनतेऽभितः । वसतस्तस्य वृद्धैका कष्टतो गौरजायत ॥ ७४ ॥ गत्वाऽन्येद्युर्वने द्वाभ्यां, काष्ठानां भारकद्वयम् । आनीय प्राङ्गणे मुक्तं विक्रेतुं जीविकाकृते ॥ ७५ ॥ तावदेको वणिग् दृष्ट्वा, चन्दनं भारकद्वयम् । स्वर्णपञ्चशतं दत्त्वा जग्राह तत्क्षणात्तदा ॥ ७६ ॥ ततः पश्चा धिया ज्ञात्वा, द्वापञ्चाशच्च चन्दनम् । क्रान्त्वा क्रान्त्वा सुवर्णस्य कोटिपञ्च गृहेऽकरोत् ॥ ७७ ॥ यतः—" सर्वाः संपत्तयोऽकस्माज्जायन्ते तस्य जन्मिनः । प्राग्जन्मोपार्जितं यस्य, पुण्यद्रविणमूर्जितम् ॥ १ ॥ " लक्ष्मीपुर्याः क्षितीशस्यातनयस्य मृतस्य च । पञ्चदिव्यार्दभूद्राज्यं, धीरस्य नवपुण्यतः ॥ ७८ ॥ अन्येद्युर्नृपतिर्निःस्वावस्थां पूर्वां स्मरन् हृदि । आलोक्य तुरगेभादिश्रियं मानित भूरिशः ॥ ७९ ॥ तद्गेहं तद्भक्तिमन्दिरमिदं, लब्धावकाशं दिवः, सा धेनुर्जरती नदन्ति करिणामेता घनाभा घटाः । स क्षुद्रो मुशलध्वनिः कलमिदं, संगीतकं योपिता—मौश्चर्यं दिवसैर्जनोऽयमियतीं, भूमीं परां मापितः ॥ ८० ॥ उद्यानमागतान् धर्मघोषाभिधगुरूत्तमान् । श्रुत्वा धीर नृपो धर्मश्रोतुकामः समीयिवान् ॥ ८१ ॥ उपदेशोऽत्र—देवपूजा गुरूपास्तिस्वाध्यायः संयमस्तपः । दानं चेति गृहस्थानां, षट् कर्माणि दिने दिने ॥ ८२ ॥ आरम्भाणां निवृत्तिर्द्रविणसफलता, संघवात्सल्यमुच्चै—र्नैर्मल्यं दर्शनस्य प्रणयिजनहितं, जीर्णचैत्यादिकृत्यम् । तीर्थौन्नत्यप्रभावं जिनवचनकृतिस्तीर्थकृत्कर्मकृत्त्वं, सिद्धेरासन्नभावः सुरनरपदवी, तीर्थयात्राफलानि ॥ ८३ ॥ एकैकस्मिन् पदे दत्ते, शत्रुञ्जयगिरिं प्रति । भवकोटिसहस्रेभ्यः, पातकेभ्यः प्रमुच्यते ॥ ८४ ॥ वज्रलेपायितैः पापैर्जन्तुरत्यन्तदुःखभाग् । तावद्यावन्न सिद्धाद्रिमधिरुह्य जि-

नं नमेत् ॥ ८५ ॥ मयूरसर्पसिंहाद्या, हिंस्रा अप्यत्र पर्वते । सिद्धाः सिद्ध्यन्ति सेत्स्यन्ति, प्राणिनो जिनदर्शनात् ॥ ८६ ॥ तेषां जन्म च वित्तं च, जीवितं सार्थकं च ये । सिद्धक्षेत्राचलं यान्ति, परेषां व्यर्थमेव तत् ॥ ८७ ॥ जहिं रामाइ तिकोडी, इगनवइ नारया य मुणिलक्खा । जाया उ सिद्धिं राया, जयउ तं पुंडरीयं तित्थं ॥ ८८ ॥ कया जिणपडिमुद्धारा, पाण्डवा जत्थवीसकोडिजुआ । मुत्तिनिलयम्मि पत्ता, तं सित्तुंजयमहातित्थम् ॥ ८९ ॥ भूपोऽङ्गीकृत्य सम्यक्त्वमूलां स द्वादशव्रतीम् । अभिग्रहं ततो भावादिमं जग्राह आदरात् ॥ ९० ॥ अद्यप्रभृति ये यात्रार्थिनः शत्रुञ्जयं प्रति । यान्तो मार्गे समेष्यन्ति, मत्पुरीसंनिधौ जनाः ॥ ९१ ॥ सदन्नपानवस्त्रादिदानैः सद्भक्तिपूर्वकम् । विधाय गौरवं तेषां, मया भोक्तव्यमेव हि ॥ ९२ ॥ लात्वेत्यभिग्रहं नत्वा, गुरूनेत्य स्वसद्मनि । भूपश्चकार यात्रार्थिजनेभ्यो भक्तिमन्वहम् ॥ ९३ ॥ इतो भीमनृपः शत्रुञ्जये नन्तुं जिनेश्वरम् । कुर्वन् महोत्सवं सारपरिवारोऽचलन्मुदा ॥ ९४ ॥ मार्गे लक्ष्मीवती पुत्री, जीर्णवस्त्रा कुरूपयुग् । मिलिता भूभुजा पृष्टाऽवस्थाहेतुं जगौ च सा ॥ ९५ ॥ भानुभूपस्तदा मां च, परिणीय स्वसद्मनि । यावत्समीयिवांस्तावद्वैरिचक्रं समागतम् ॥ ९६ ॥ भवज्जामातरं हत्वा, संग्रामे वैरिभिः क्षणात् । गृहीतं श्रीपुरं सर्वलक्ष्मीबलसमन्वितम् ॥ ९७ ॥ यतः—"तावच्चन्द्रबलं ततो ग्रहबलं, ताराबलं भूबलं, तावत्सिद्ध्यति वाञ्छितार्थमखिलं, तावज्जनः सज्जनः । मुद्रामण्डलमन्त्रतन्त्रमहिमा, तावत्कृतं पौरुषं, यावत्पुण्यमिदं महद्विजयते, पुण्यक्षये क्षीयते ॥ १ ॥" तादृशं तनयावृत्तं, सर्वं श्रुत्वा महीपतिः । मन्यते स्म परीणामं, कर्मणां सबलं दृढम् ॥ ९८ ॥ ततो मार्गेऽचलल्लक्ष्मीपुरोपान्ते नृपोऽगमत् । तावत्तन्नगरस्वामी, मिलनाय समीयिवान् ॥ ९९ ॥ पृष्टं लक्ष्मीपुरेशेन, कुत्र यूयं गमिष्यथ ?। शत्रुञ्जये गमिष्यामीत्युक्ते भूपो जगाविदम् ॥ १०० ॥ सर्वसंघयुतेनाद्य, भवता मेदिनीपते ! । भोक्तव्यं मामके गेहेऽभिग्रहोऽस्तीदृशो मम ॥ १०१ ॥ भीमो जगावहं यात्रां, कृत्वा शत्रुञ्जयाद्वलन् । विधास्ये भोजनं संघयुतोऽहं तव सद्मनि ॥ १०२ ॥ धीरो जगौ च मद्भार्या, जिनयात्रार्थिनं

सदा। भोजयित्वाऽखिलं भोक्तुमुपविशति नान्यथा ॥ १०३ ॥ भीमः प्राहेदृशा भार्याः, कियत्यः सन्ति ते नृप !। धीरः प्राह ममास्त्येका, गेहिनी नापरा पुनः ॥ १०४ ॥ ततो भीमनृपः संवसहितस्तस्य सद्मनि । भोक्तुं यावदगात्तावत्पद्मा हर्षितवत्यभूत् ॥ १०५ ॥ परिधाप्य द्रुतं पट्टदुकूलं रक्तवर्णकम् । पद्मा सद्भूषणा भूमीभुजे आचमनं ददौ ॥ १०६ ॥ वेषं नवं नवं कृत्वा, पद्मां च परिवेषणम् । कुर्वाणां भूपतिः प्रेक्ष्य, दध्यावेवं स्वमानसे ॥ १०७ ॥ अनेन भूभुजा प्रोक्तं, ममैका विद्यते प्रिया । दृश्यन्ते ननु भूयस्योऽधुनेति कौतुकं महत् ॥ १०८ ॥ एवं चिन्तयति क्ष्मापे, चित्ते रूपशतार्दनु । पूर्वपित्रर्पितां जीर्णां, शाटिकां परिधाय च ॥ १०९ ॥ परिवेषयितुं यावद्, भूपदृष्टौ समाययौ । तावदेव नृपो दध्यौ, किमियं सा सुता मम ? ॥ ११० ॥ युग्मम् ॥ जेमनानन्तरं शङ्कमानो भूपो रहः शनैः । पप्रच्छेति महीपालं, धीरं दीनमनास्तदा ॥ १११ ॥ कस्येयं विद्यते पुत्री, तावकीना प्रिया वद । धीरः प्राह त्वदीयेयं, पद्माह्वा ननु नन्दिनी ॥ ११२ ॥ ततो भूपः समुत्थाय, सुताया मिलितो द्रुतम् । प्रोवाचेति दृढं कर्मपरिणाममनीदृशम् ॥ ११३ ॥ यतः—" क्षणं बालो भूत्वा क्षणमपि च युवा कामरसिकः, क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः । जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनुर्नरः संसाराङ्के वसति यमधानी यवनिकाम् ॥ १ ॥ देवो नेरइउत्ति य कीडपयंगुत्ति माणुसो वेसो । रूवस्सी अ विरूवो सुहभागी दुक्खभागी अ ॥ २ ॥ राउत्ति य दमगुत्ति य एस सयागुत्ति एस वेयविऊ । सामी दासो पुज्जो खलत्ति अधणो धणव इत्ति ॥ ३ ॥ " भूपः सन्मानयामास, पुत्रीं जामातृसंयुताम् । सद्वसनाद्यलङ्कारसुवर्णादिप्रदानतः ॥ ११४ ॥ ततः शत्रुञ्जये नन्तुं, युगादीशं जिनेश्वरम् । भीमेन सह धीरोऽपि, चलितो गृहिणीयुतः ॥ ११५ ॥ शत्रुञ्जये जिनं नत्वा, पूजयित्वा च सत्सुमैः । उदारैः स्तवनैर्धीरः, स्तवीति स्मेति भक्तितः ॥ ११६ ॥ यत्र प्रदेशे चरणौ ददासि, त्वं, तत्पवित्री कुरुषे क्षणेन। ते स्थीयमानो मम मानसे तत् करोषि ? पूतं नहि किं जिनेश ! ॥ ११७ ॥ इत्यादि स्तुवतो धीरभूपस्याद्भुतभावतः । बभूव

केवलज्ञानं, श्रीयुगादिजिनाग्रतः ॥ ११८ ॥ आनीय तत्क्षणाल्लिङ्गं, तस्य दत्त्वा सुधांधसः। विदधुः केवलज्ञानमहोत्सवमनुत्तरम् ॥ ११९ ॥ देवनिष्पादितस्फारगाङ्गेयकमलासने। उपविश्य व्यधाद्धर्मदेशनां धीरकेवली ॥ १२० ॥ तथाहि—आयुर्वायुचलं सुरेश्वरधनुर्लोलं बलं यौवनं, विद्युद्दण्डतुलं धनं गिरिनदीकल्लोलवच्चञ्चलम्। स्नेहं कुञ्जरकर्णतालतरलं, देहं च रोगाकुलं, ज्ञात्वा भव्यजनाः! सदा कुरुत भोः!, धर्मं मुदा निश्चलम् ॥ १२१ ॥ जिनपूजन साधुवन्दनश्रुतपाठश्रवणार्यसंगतिः। गुरुतीर्थमहाप्रभावनैः सफलं जन्म निज सृजन्त्वलम् ॥ १२२ ॥ तत्र लात्वा व्रतं पद्मा, धीरकेवलिसंनिधौ। क्षिप्त्वा दुष्कर्मणां ग्रन्थिं, तपसा प्राप केवलम् ॥ १२३ ॥ भीमोऽपि तृणवत्त्यक्त्वा, राज्यं वैराग्यरङ्गतः। आत्तव्रतः क्रमात्प्राप, परमां पदवीं तदा ॥ १२४ ॥ अन्येऽपि बहवो भव्याः, प्राप्य बोधिमनुत्तराम्। तीर्थमाहात्म्यतः क्षीणकर्माणो निर्वृतिं ययुः ॥ १२५ ॥ भीमधीरसुतौ हंसराजवीराभिधौ ततः। प्रणम्यादिजिनं स्वं स्वं, राज्यं सपद्यधिष्ठितौ ॥ १२६ ॥ एवं ये कुर्वते यात्रां, शत्रुञ्जयगिरौ जनाः। द्वित्रिभवान्तरे ते हि, गमिष्यन्ति शिवालये ॥ १२७ ॥ इति यात्रायां धीरभूपतिकथा ॥ ४ ॥

स्मरन् पञ्चनमस्कारं, शुभभावेन मानवः। स्वाभीष्टं साधयत्याशु, वने वररुचिर्यथा ॥ १२८ ॥ आसील्लक्ष्मीपुरे भीमवणिक्पुत्रो धनाभिधः। महाबलाभिधस्तत्र, क्षत्रियोऽस्त्यतिनिर्दयः ॥ १२९ ॥ गत्वा देशान्तरे तौ चार्जयित्वा द्रविणं बहु। चलितावुत्सुकौ गेहं प्रति क्षत्रियनैगमौ ॥ १३० ॥ यतः—प्राप्तविद्यार्थशिल्पानां, देशान्तरनिवासिनाम्। क्रोशमात्रोऽपि भूभागः, शतयोजनवद्भवेत् ॥ १ ॥" राजपुत्रश्चलन्मार्गे, चिन्तयामासिवानिति। उपायेन गृहीष्यामि, धनमस्याखिलं ननु ॥ १३१ ॥ अनुहरतः खलु सुजनाग्रिमपाश्चात्यभागयोः सूच्याः। एकः कुरुते छिद्रं, गुणवानन्यस्तु पिदधाति ॥ १३२ ॥ मुखं पद्मदलाकारं, वाचा चन्दनशीतला। हृदयं कर्तरीतुल्यं, त्रिविधं धूर्तलक्षणम् ॥ १३३ ॥ चलन्तौ तौ निशीथिन्यां, स्थितौ क्वचिद्वने तदा। सुप्ते वणिक्सुते राजपुत्रः प्रमुदितोऽभवत् ॥ १३४ ॥ पादेन श्रेष्ठिपुत्रस्य, शिखा-

मॉक्रम्य क्षत्रियः । यावच्छिनत्ति तच्छीर्षं, तावदाहेति नैगमः ॥ १३५ ॥ भोः क्षत्रिय ! पितुर्मेऽस्ति, संदेशश्च चिरन्तनः । तेन तस्य गमि-
ष्यन्ति, प्राणा मे मरणश्रुतेः ॥ १३६ ॥ कथयिष्यसि यद्राजपुत्र! संदेशमेककम् । तदाऽहं कथयिष्यामि, तुभ्यं स्यान्मे ततः सुखम् ॥ १३७ ॥
क्षत्रियेण वदेत्युक्ते, वणिक् प्रोवाच तं प्रति । अग्रशिखेति वक्तव्यं, पितुरग्रे मम त्वया ॥ १३८ ॥ संदेशं हृदये कृत्वा, पादेनाक्रम्य तां शिखा-
म । शिरः खड्गेन चिच्छेद, तस्याशु क्षत्रियाधमः ॥ १३९ ॥ लात्वाऽखिलं धनं सौवगृहं क्षत्रिय ईयिवान् । न्यासीकृत्यावनौ श्यामसुखोऽ-
गाच्छ्रेष्ठिनो गृहे ॥ १४० ॥ सोऽवक् श्रेष्ठिन् ! स्फुटं पुत्रस्तवाहं चार्जितश्रियौ । चलन्तौ वेगतो यावदागतौ सुन्दरे वने ॥ १४१ ॥ ताव-
त्तत्र महाधाटी, मिलिता क्रूरकर्मिका । कुर्वतोरावयोर्युद्धं, पतितो भवतः सुतः ॥ १४२ ॥ धनं लात्वा गतायां च, धाट्यां तत्राहमागमम् ।
भवतः सूनुना प्रोक्तमिदं कण्ठगतासुना ॥ १४३ ॥ अग्रशिखेति वक्तव्यं, पितुरग्रे त्वया मम । ततः समाधिना प्राप्तः, परलोकं भवत्सुतः ॥
१४४ ॥ श्रुत्वा पुत्रमृतिं श्रेष्ठी, कुर्वन् दुःखं भृशं हृदि । शोकसं पूरितस्वान्तः, शून्यचेता अभूत्तदा ॥ १४५ ॥ ततो दध्यौ हृदि श्रेष्ठी, अग्र-
शिखेति शब्दतः । किमपि ज्ञापितं भावि, सूनुना सुधिया मम ॥ १४६ ॥ ततो हत्वा शुचं श्रेष्ठी, गत्वा राजकुले तदा । सूनोः संबन्धमुक्त्वा-
ऽस्थात्, श्यामवक्त्रो नृपाग्रतः ॥ १४७ ॥ आकार्य पण्डितान् पञ्चशतं प्राहेति भूपतिः । अग्रशिखेति शब्दार्थः, कथ्यतामग्रतो मम ॥ १४८ ॥
भूयो भूयश्च तैस्तत्र, चिन्तितो मानसे भृशम् । न ज्ञातस्तस्य वाक्यस्य, मनागर्थश्च पण्डितैः ॥ १४९ ॥ ततो भूमीभुजा प्रोक्तं, भो भोः ? प-
ण्डितबालिशाः ! । वाक्यस्यार्थं कथङ्कारं, भवन्तः कथयन्तु न ॥ १५० ॥ षण्मासान्ते न चेदर्थो, भवद्भिः कथयिष्यते । तदा हन्म्यखिलान्
युष्मान्, सकुटुम्बांश्च वाणके ॥ १५१ ॥ राज्ञोक्तं प्रतिपद्याशु, भ्रेमुः सर्वासु दिक्षु ते । अलब्धार्थाः समाजग्मुर्गेहं कम्पितविग्रहाः ॥ १५२ ॥
यतः—" अमेध्यमध्ये कीटस्य, सुरेन्द्रस्य सुरालये । समाना जीविताकाङ्क्षा, समं मृत्युभयं द्वयोः ॥ १ ॥ " भ्रमन् वररुचिः साधुसमीपे का-

नने कचित् । नमस्कारफलं श्रुत्वाऽभवत्तद्गणनापरः ॥ १५३ ॥ ततो वररुचिः पञ्चनमस्कारान् निरन्तरम् । शङ्खावर्तादिना बाढं गणयामास
मानसे ॥ १५४ ॥ वने वररुचिर्भ्राम्यन् सुप्तः कचित्तरोरधः । उपरिष्टादुवासास्य किंनरीकिंनरद्वयम् ॥ १५५ ॥ किंनरः किंनरीं प्राह, नि-
शीथसमये तदा । पण्डितानां पञ्चशतं, हनिष्यति नृपः प्रगे ॥ १५६ ॥ किंनरी प्राह किं तस्यार्थस्त्वया ज्ञायते न वा ? । किंनरः प्राह जा-
नामीत्युक्ते प्रोवाच किंनरी ॥ १५७ ॥ ममाग्रे ब्रूहि तस्यार्थमित्युक्ते किंनरो जगौ । दिवा न युज्यते वक्तुं, किं पुनर्निशि किंनरि ! ॥ १५८ ॥
यतः—" व्याप्ता वसुन्धरा धूर्तैः, परद्रव्यापहारकैः । ततश्च जल्पतो रात्रौ, दूषणं भवति ध्रुवम् ॥ १ ॥ " कदाग्रहे भृशं नार्या, विहिते किंनरो
जगौ । अग्रशिखेति वाक्यार्थः, श्रूयतामिति किंनरि ! ॥ १५९ ॥ अनेन तव पुत्रस्य, प्रसुप्तस्य वनान्तरे । शिखामाक्रम्य पादेन, खड्गेनापहृतं
शिरः ॥ १६० ॥ अग्रशिखेति वाक्यार्थं, श्रुत्वा वररुचिस्तदा । आगत्य स्वपुरे कृत्वाडम्बरं पण्डितान्वितः ॥ १६१ ॥ श्रोतुमर्थमसंख्यातलो-
केषु मिलितेष्वथ । राज्ञोऽग्रे कथयामास, विस्तरात्तत्र निर्भयः ॥ १६२ ॥ युग्मम् ॥ अनेन तव पुत्रस्य, प्रसुप्तस्य वनान्तरे । शिखामाक्रम्य पा-
देन, खड्गेनापहृतं शिरः ॥ १६३ ॥ विज्ञाय क्षत्रियं चौरमानीय तत्र भूपतिः । दापयामास निःशेषं, द्रव्यं तं श्रेष्ठिने तदा ॥ १६४ ॥ रे रे
पापिष्ठ ! चण्डाल ! न स्थेयं मम नीवृति । यदि स्थास्यसि ते प्राणानहं लास्यामि निश्चितम् ॥ १६५ ॥ एवं निर्वासितो भूयो, भूपेन क्षत्रि-
याधमः । दूरदेशे समेत्याशु, बभूवातीव दुःखितः ॥ १६६ ॥ भ्रामं भ्रामं महीपीठे, निर्धनः पापपूरितः । दुर्ध्यानान्मरणं प्राप्य, क्षत्रियो दुर्ग-
तिं गतः ॥ १६७ ॥ सद्वस्त्राभरणैर्बाढं, भूपेन परिधापिताः । पण्डिता निखिलाः प्रापुः, सद्यो गेहं निजं निजम् ॥ १६८ ॥ नमस्कार स्मृतेः
पुंसामापदा सुदुरुत्तरा । उपैति विलयं नूनं, पण्डितानामिवाखिला ॥ १६९ ॥ इति नमस्कारप्रभावोपरि वररुचिकथा ॥ ५ ॥
ये कुर्वन्ति तपः सम्यग्भावेन भव्यदेहिनः । इहामुत्र लभन्ते ते, संपदं शङ्खदत्तवत् ॥ १७० ॥ आसीच्छङ्खपुरे शङ्खवणिग् शङ्खवती-

॥२३॥

प्रियः । दरिद्री परगेहेषु, कर्म कृत्वा च जीवति ॥ १७१ ॥ शङ्खदत्ते सुते जाते, मृता शङ्खवती प्रिया । सप्ताष्टवार्षिको जातः, कष्टेन शङ्खभूस्त-
तः ॥ १७२ ॥ यतः—" बालस्स मायमरणं, भज्जामरणं च जुव्वणारम्भे । थेरस्स पुत्तमरणं, तिन्निवि दुक्खाइं गुरूआइं ॥ १ ॥ " अकस्माज्ज-
नके तस्य, मृते शूलविकारतः । अतीव दुःखितः शङ्खदत्तोऽभूत् कर्मयोगतः ॥ १७३ ॥ यतः—"क्षते प्रहाराः प्रपतन्त्यवश्यं, धान्यक्षये स्फूर्जति
जाठराग्निः । आपत्सु मित्राणि विसंवदन्ति, छिद्रेष्वनर्था बहुलीभवन्ति ॥ १ ॥ " इन्धनार्थं गतोऽन्येद्युर्वनेऽद्राक्षीन्मुनीश्वरम् । निजं दुःख-
स्वरूपं सोऽचीकथदग्रतो मुनेः ॥ १७४ ॥ यतः—रोगिणां सुहृदो वैद्याः, प्रभूणां चाटुकारिणः । मुनयो दुःखदग्धानां, गणकाः क्षीणसंपदाम्
॥ १७५ ॥ मुनिः प्राह त्वया नैव, कृतं पूर्वभवे तपः । तेनाजनि तवेदृक्षाऽवस्था दुःखप्रदा भृशम् ॥ १७६ ॥ शङ्खदत्तो जगौ स्वामिन् ! सां-
प्रतं किं करोम्यहम् ? । हितार्थी मुनिराचष्ट, तपः शिवसुखप्रदम् ॥ १७७ ॥ यतः—" अथिरं पि थिरं वंकं पि, उज्जुअं दुल्लहं पि तह सुलहं ।
दुस्सज्झं पि सुसज्झं, तवेण संपज्जए कज्जं ॥ १ ॥ बीया पंचमि अट्ठमि, एगारसी चउदसी पण तिहिओ । एआओ सुयतिहीओ, गोअमगण-
हारिणा भणिआ ॥ २ ॥ बीआ दुविहे धम्मे, पंचमि नाणे अ अट्ठमी कम्मे । एगारसि अंगाणं, चउद्दसी चउदपुव्वाणं ॥ ३ ॥ " अनेन त-
पसा जीवा, लभन्ते पदमव्ययम् । तेन दुःखच्छिदे त्वं भो ! यथाशक्ति तपः कुरु ॥ १७८ ॥ शङ्खदत्तो जगौ पञ्चपर्व्यां च क्षपणः सदा ।
कर्तव्यः सन्ततं कर्मक्षयार्थं शुभभावतः ॥ १७९ ॥ मुनिः प्राह महाभाग ! नियमोऽयं त्वया सदा । अखण्डः पालनीयो हि, शुभभावेन श-
र्मदः ॥ १८० ॥ आदाय नियमं हृष्टः, शङ्खदत्तो मुनिं मुदा । प्रणम्य गृहमागत्य, पञ्चपर्व्यां तपो व्यधात् ॥ १८१ ॥ गृह्णन्नसारमाहारं, शङ्ख-
दत्तो निरन्तरम् । गुरुणोक्तं तपः कुर्वन्, खण्डीचक्रे च न व्रतम् ॥ १८२ ॥ पञ्चम्यां क्षपणं कृत्वा, यावत्षष्ठ्यां गतो गृहम् । आयाति भक्षितुं
तावदन्नं जग्धं शुना स्यात् ॥ १८३ ॥ सप्तमीदिवसे यावद्धान्यं राप्नोति यत्नतः । भग्ना तावद्दुर्षा धान्यं, गतमन्नावशेषतः ॥ १८४ ॥ अन्ना-

भावाद्दिने तस्मिन्, तस्याभूत्क्षपणः पुनः । ततोऽपि न मनाग् खेदं दधाति निजमानसे ॥ १८५ ॥ कृत्वोपवासमष्टम्यां, यावता निशि सुप्त-
वान् । तावत्काचित्समेत्य स्त्री, प्रोवाचेति स्फुटाक्षरम् ॥ १८६ ॥ किं जागर्ष्यथवा सुप्तः, शङ्खदत्त ! वदाधुना । जागर्मीति च तेनोक्ते, प्रोवाच
सा मृगेक्षणा ॥ १८७ ॥ देहि दानं सुपात्रेभ्यः, पुनः संघाधिपो भव । परिधेहि दुकूलानि, विशिष्टाभरणानि च ॥ १८८ ॥ शङ्खदत्तो जगौ
दानं, धनाभावात्कथं ददे ? । स्त्री प्राह सद्मनः कोणान्, प्रभाते त्वं विलोकय ॥ १८९ ॥ श्रुत्वैतन्नैगमः प्राह, काऽसि त्वं कुत आगता ? ।
नारी जगावहं चक्रेश्वरी श्रीजिनसेविका ॥ १९० ॥ त्वत्साहसेन तुष्टाऽहं, तुभ्यं जानीहि नैगम ! । इत्युक्त्वाऽगात् क्वचिद्विद्युदिव भासुररूप-
भाग् ॥ १९१ ॥ प्रातरुत्थाय गेहस्य, कोणान् यावन्निरीक्षते । तावत्स्वर्णभृतान् कुम्भान्, चतुरः पश्यति स्म सः ॥ १९२ ॥ यतः—" यस्मा-
द्विघ्नपरम्परा विघटते, दास्यं सुराः कुर्वते, कामः शाम्यति दाम्यतीन्द्रियगणः, कल्याणमुत्सर्पति । उन्मीलन्ति महर्द्धयः कलयति, ध्वंसं च यः
कर्मणां, स्वाधीनं त्रिदिवं शिवं च भवति, श्लाघ्यं तपस्तन्न किम् ? ॥ १ ॥ " संसारबीजभूतानां, कर्मणां जरणादिह । निर्जरा सा स्मृता द्वे-
धा, सकामा कामवर्जिता ॥ १९३ ॥ ज्ञेया सकामा यमिनामकामा त्वन्यदेहिनाम् । कर्मणां फलवत्पाको, यदुपायात्स्वतोऽपि च ॥ १९४ ॥ स-
दोषमपि दीप्तं स्यात्सुवर्णं वह्निना यथा । तपोऽग्निना तप्यमानस्तथा जीवो विशुद्ध्यति ॥ १९५ ॥ अनशन मौनोदर्यं, वृत्तेः संक्षेपणं तथा ।
रसत्यागस्तनुक्लेशो, लीनतेति बहिस्तपः ॥ १९६ ॥ प्रायश्चित्तं वैयावृत्त्यं, स्वाध्यायो विनयोऽपि च । व्युत्सर्गोऽथ शुभध्यानं, षोढेत्याभ्य-
न्तरं तपः ॥ १९७ ॥ दीप्यमाने तपोवह्नौ, बाह्ये चाभ्यन्तरे तथा । यमी जरति कर्माणि, दुर्जराण्यपि तत्क्षणात् ॥ १९८ ॥ भावात्सदा तप-
स्तस्य, शङ्खदत्तस्य कुर्वतः । दिने दिने रमा वृद्धिं, गतेन्दोरिव सागरः ॥ १९९ ॥ श्रीयुगादिजिनेन्द्रस्य, सद्म कैलाससोदरम् । कारितं शङ्ख-
दत्तेन, भूरिलक्ष्मीव्ययान्मुदा ॥ २०० ॥ अन्येद्युः पौषधं लात्वा, कृत्वाष्टमतपः पुनः । शङ्खदत्तो युगादीशं, प्रासादे वन्दितुं ययौ ॥ २०१ ॥

वन्दमानस्य विधिना, जिनेन्द्रं शुभध्यानतः । उत्पन्नं केवलज्ञानं, शङ्खदत्तस्य गेहिनः ॥ २०२ ॥ क्षिप्त्वा निःशेषकर्माणि, शङ्खदत्तो वणिग्वरः । तपःप्रभावतः सद्यो, मुक्तिपुर्यां समीयिवान् ॥ २०३ ॥ एवं ये मनुजाः शुद्धं, तपः कुर्वन्ति भावतः । छित्त्वा निःशेषकर्माणि, ते गच्छन्ति शिवालयम् ॥ २०४ ॥ इति तपोविषये शङ्खदत्तकथा ॥ ६ ॥

ये कुर्वन्ति श्रुताभ्यासं, भक्तिभावेन संततम् । ज्ञानाद्यभ्युदयं तेषां, धीरस्येव प्रणश्यति ॥ २०५ ॥ देवानन्दपुरे श्रेष्ठी, कुलानन्दाभिधोऽभवत् । पद्मश्रीगृहिणी तस्य, विलसच्छीलशालिनी ॥ २०६ ॥ धनश्रेष्ठिप्रियां पुत्रमङ्के कृत्वाऽन्यदा स्थिताम् । लालयन्तीं समालोक्यो ध्यायि पद्मश्रियेति च ॥ २०७ ॥ उत्पतन् न्यपतन् रिङ्खन्, हसन् लालावलीं वमन् । कस्याश्चिदेव धन्यायाः, क्रोडमाक्रमते सुतः ॥ २०८ ॥ गृहमागत्य पद्मश्रीः, प्रोवाचेति पतिं प्रति । विना पुत्रं गृहं नैव, धत्ते शोभां मनागपि ॥ २०९ ॥ यतः—“वस्तूद्द्योतयते दीपः, प्रत्यक्षं निजतेजसा । निष्कलङ्कः पुनः पुत्रः, परोक्षानपि पूर्वजान् ॥ १ ॥ विना स्तम्भं यथा गेहं, यथा देहं विनात्मना । तरुर्यथा विना मूलं, विना पुत्रं तथा कुलम् ॥ २ ॥” आराध्य देवतां काञ्चित्, मार्ग्यते तनयोऽनघः । श्रेष्ठिनोक्तमिदं सत्यं, यस्याः पुत्रोऽस्ति सा वरा ॥ २१० ॥ ततः पत्नीयुतो नित्यं, कुलानन्दः सुभक्तितः । चक्रेश्वर्याः पदोपास्तिं, कुरुते स्मार्चनादिना ॥ २११ ॥ तुष्टा चक्रेश्वरी प्राह, श्रेष्ठिन्! किं ते विलोक्यते?। जगौ श्रेष्ठी सुतं देहि, कुलाम्बरविभूषणम् ॥ २१२ ॥ देवी प्रोवाच ते पुत्रो, भविष्यति मनोहरः । श्रीयुगादिजिनेन्द्रस्य, क्रमाम्बुजनिषेवणात् ॥ २१३ ॥ ततो हृष्टः सदा श्रेष्ठी, श्रीयुगादिजिनेशितुः । चक्रेऽष्टधाऽर्चनां चारुपुष्पादिभिर्निरन्तरम् ॥ २१४ ॥ ततो नित्यं युगादीशसेवां कुर्वाणयाऽऽदरात् । सुखं पद्मश्रियासावि, सुतः सत्स्वप्नसूचितः ॥ २१५ ॥ कृत्वा जन्मोत्सवं स्फारं, कुलानन्दः प्रमोदतः । सूनोर्धीरेति नामादात्, सर्वस्वजनसंमतम् ॥ २१६ ॥ लाल्यमानोऽनिशं मात्रा, स्तन्यपानान्नदानतः । सप्ताष्टवार्षिको धीरकुमारोऽभून्मनोहरः

॥ २१७ ॥ सदुत्सवं पिता लेखशालायां पण्डितान्तिके। मुमोच नन्दनं धीरं, पठनार्थं प्रमोदतः ॥ २१८ ॥ यतः—"माता शत्रुः पिता वैरी,
बालो येन न पाठितः। न शोभते सभामध्ये, हंसमध्ये बको यथा ॥ १ ॥" पण्डितैर्निशं सूनोः, पाठ्यमानस्य यत्नतः। एकमप्यक्षरं
नैवायातं ज्ञानविराधनात् ॥ २१९ ॥ श्रुत्वा पुत्रस्य मूर्खत्वं, कुलानन्दो बुधाऽऽननात्। अतीव दुःखितः स्वान्ते, भार्यया सहितोऽजनि ॥ २२० ॥
यतः—"अजातमृतमूर्खेभ्यो, मृताजातौ सुतौ वरौ। यतस्तौ स्वल्पदुःखाय, यावज्जीवं जडो भवेत् ॥ १ ॥ वरं गर्भस्रावो, वरमृतुषु नैवाभिग-
मनं, वरं जातः प्रेतो, वरमपि च कन्यैव जनिता। वरं वन्ध्या भार्या, वरमगृहवासे प्रपतितं, न चाविद्वान् रूपद्रविणबलयुक्तोऽपि तनयः ॥ २ ॥"
इतस्तत्रागतान् धर्मघोषाभिधगुरून् बहिः। सपुत्रो वन्दितुं श्रेष्ठिकुलानन्दो ययौ मुदा ॥ २२१ ॥ गुरून् प्रेक्ष्य द्रुतं धीरसूनोर्मूर्छामुपागमत्।
स्वस्थीकृत्योपचारेण, कुलानन्दो जगाविति ॥ २२२ ॥ मम पुत्रस्य भगवन्नेकमप्यक्षरं मनाग्। नैवायाति कुतः कर्मोदयात् कथय सांप्रतम्?
२२३ ॥ गुरुः प्रोवाच चम्पायां, श्रेष्ठी धर्माभिधोऽभवत्। पद्माप्रियाभवः पुत्रस्तस्याजनि गुणाह्वयः ॥ २२४ ॥ पाठ्यमानो गुणः पित्रा,
शश्वत्पण्डितसंनिधौ। कलाकलापकुशलो, बभूवातीवकोविदः ॥ २२५ ॥ अहमेवाखिलां विद्यां, जानामीति च गर्वितः। विरराधैष्यया ज्ञा-
नमकालभणनादिना ॥ २२६ ॥ यतः—"काले विणए बहुमाणे, उवहाणे तह य निन्हवणे। वंजण अत्थ तदुभए, अट्ठविहो नाणमायारो
॥ १ ॥" विराध्याजन्मतो ज्ञानमकालभणनादिना। मृत्वा तेऽजनि पुत्रोऽसौ, मूर्खशीर्षशिरोमणिः ॥ २२७ ॥ यतः—"नाणं पंचपयारं,
पयासि असेसवत्थुपरमत्थं। जो तस्स कुणइ निन्दं, सो असुहं बंधए कम्मं ॥ १ ॥ भासइ अवन्नवायं, विग्धं कारेइ नाणनाणीणं। सो बंधइ
अन्नाणी, नाणावरणं असुहकम्मं ॥ २ ॥ मूओ बुद्धिविहूणो, अन्नाणी मेहधारणारहिओ। जम्मंतरे वि न लहइ, सो मइनाणाइअं नाणं ॥
३ ॥ पंच विहं पि हु नाणं, जणमज्झे जो पसंसई पुरिसो। वट्टइ उवयारंमि य, सो मइमं होइ अन्नभवे ॥ ४ ॥" धर्माधर्मं समाकर्ण्य, गुरुपार्श्वे

विरागवान्। दीक्षामादाय विलसज्ज्ञानत्रयधरोऽजनि ॥ २२८ ॥ स एवाहमिहेदानीं, विहरन्नागमं ततः। मां दृष्ट्वाऽस्याभवन्मूर्छा, गतिः पूर्वभवस्मृतेः ॥ २२९ ॥ यद्ययं कुरुते ज्ञानाराधनं भक्तिपूर्वकम्। तदाऽस्य व्रजति ज्ञानावृत्तिकर्म क्षयं क्षणात् ॥ २३० ॥ ज्ञानस्याराधनं कार्यं, मया सर्वप्रकारतः। एवं धीरो गुरोः पार्श्वे, जग्राहाभिग्रहं तदा ॥ २३१ ॥ कुलानन्देन सम्यक्त्वरत्नं सद्वादशव्रतम्। जगृहे त्रिदिवश्रेयःसुखश्रेणिनिबन्धनम् ॥ २३२ ॥ नत्वा मुनीश्वरं भक्त्या, कुलानन्दः सुतान्वितः। वैराग्यवासितस्वान्तो, निजावासं समीयिवान् ॥ २३३ ॥ ततः सिद्धान्तलिखनलेखनादिविधानतः। आरराध तथा ज्ञानं, यथा धीरो बुधोऽजनि ॥ २३४ ॥ धर्मघोषगुरोः पार्श्वे, धीरो लात्वाऽन्यदा व्रतम्। ज्ञानिनां सततं भक्तिं, चकारानघमानसः ॥ २३५ ॥ अन्नपानादिना तस्य, ज्ञानिसेवां वितन्वतः। उत्पन्नं केवलज्ञानं, तस्मिन्नेव भवे क्रमात् ॥ २३६ ॥ प्रणिहन्ति क्षणार्धेन, साम्यमालम्ब्य कर्म तत्। यन्न हन्यान्नरस्तीव्रतपसा जन्मकोटिभिः ॥ २३७ ॥ कर्म जीवं च संश्लिष्टं परिज्ञानात्मनिश्चयः। विभिन्नीकुरुते साधुः, सामायिक शलाकया ॥ २३८ ॥ प्रबोध्य भविनोऽनेकान्, धीरर्षिः प्राप्तकेवलः। क्षिप्तकर्माष्टकव्रातो, मुक्तिपुर्यां समीयिवान् ॥ २३९ ॥ एवं यो मनुजः शश्वदाराध्य श्रुतं सदा। धीरवल्लभते मुक्तिशर्म स ध्वस्तकल्मषः ॥ २४० ॥ इति श्रुताराधनविषये धीरकुमारकथा ॥ ७ ॥

परेभ्यो भव्यवाग्दानाद्युपकारं वितन्वतः। पुंसः स्यात्सदने लक्ष्मीः, पुलिन्द्रस्येव भूयसी ॥ २४१ ॥ उज्जयिन्यां पुरि श्रीमान् विक्रमादित्यभूपतिः। पालयन् जनतां न्यायमार्गे राज्यं चकार सः ॥ २४२ ॥ अन्यदाऽश्वद्वयं दूरात्सर्वलक्षणलक्षितम्। आगतं च तयोर्मध्यादेकस्मिन्नधिरुह्य च ॥ २४३ ॥ विक्रमादित्यभूपालो, भूरिसेनासमन्वितः। उद्याने समगाद्वेगपरीक्षार्थं पुरात्तदा ॥ २४४ ॥ युग्मम् ॥ अजानानो विपरीतशिक्षितं सहसा नृपः। निन्येऽश्वेनाटवीं सिंहव्याघ्रवैतालदारुणाम् ॥ २४५ ॥ गत्वा तरोरधो यावदुत्ततराश्वतो नृपः। सौ-

कुमार्यतया तावन्मृत्युमाप तुरङ्गमः ॥ २४६ ॥ नृपतिस्तं मृतं मत्वा, तृषया बाधितो भृशम् । मूर्च्छितः पतितो भूमौ, शुष्कवृक्ष इवाचिरात् ॥ २४७ ॥ तावन्नरेण कान्तारवासिनाऽश्वपदे क्षणात् । तत्रागतेन भूपालस्तदवस्थो निरीक्षितः ॥ २४८ ॥ पुरुषोऽयं महान् कश्चिदिति ध्यात्वा सरोवरात् । आनीय सलिलं सिक्तोऽभवद् भूपः सचेतनः ॥ २४९ ॥ निरीक्ष्य पुरुषं तं च, निष्कारणोपकारिणम् । मुदितो मेदिनीनाथः प्रोवाचेति वचस्तदा ॥ २५० ॥ यतः—" विरला जाणंति परगुण, विरला पिच्छंति अत्तणो दोसे । विरला परकज्जपरा, परदुक्खदुक्खिआ विरला ॥ १ ॥ दो पुरिसे धरउ धरा, अहवा दोहिं वि धारीआ धरणी । उवयारे जस्स मइ, उवअरिउं जो न परिमूसई ॥ २ ॥ हुंति परकज्जनिरया, निअकज्जपरं मुहा फुडं सुअणा । चंदो धवलेइ महीं, न कलंकं अत्तणो फुंसे ॥ ३ ॥" अत्याग्रहान्नृपं शैलगृहोऽयं निजसद्मनि । नीत्वा पुलिन्द्रकः पत्नीयुक्तो भक्तिमचीकरत् ॥ २५१ ॥ पुलिन्द्रकेण भूपालः, कणिकाघृतदानतः । बुभुक्षितः क्षणात्स्वस्थीकृतः सन्मानितः पुनः ॥ २५२ ॥ यतः—" संकुचन्ति कलौ तुच्छाः, प्रसरन्ति महाशयाः । ग्रीष्मे सरांसि शुष्यन्ति, कामं वार्धिस्तु वर्धते ॥ १ ॥ " गृहमध्ये नृपं कृत्वा, सुखसुप्तं पुलिन्द्रकः । ददौ द्वारि द्विपश्वाशच्छयोत्सेधां शिलां पुनः ॥ २५३ ॥ भूपरक्षाकृते सुप्तो, गृहद्वारे पुलिन्द्रकः । निरपेक्षा निजे भद्रे, भवन्ति ह्युत्तमा नराः ॥ २५४ ॥ इतः श्रुत्वा निशि व्याघ्रारावं रौद्रं बहिस्तदा । दध्यौ पुलिन्द्रिका कान्तः, सिंहेन निहतो ननु ॥ २५५ ॥ उत्थाय शयनात्स्वीयात्पुलिन्द्री व्याकुलाशया । विक्रमार्कनृपोपान्ते, कथितुं श्राक् समागमत् ॥ २५६ ॥ सुसमुत्थाप्य भूपालं, प्रोवाचेति पुलिन्द्रिका । हतो व्याघ्रेण मत्कान्तो, व्याघ्रारावश्रुतेर्ननु ॥ २५७ ॥ दत्ता द्वारि द्विपश्चाशत्शयोत्सेधा शिला दृढम् । सा शिला मत्प्रियेणैव, पश्चात्कर्तुं च शक्यते ॥ २५८ ॥ व्याघ्रेण मारितो मेऽद्य, पतिः संभाव्यते ननु । तेनावां निस्सरिष्यावः, कथमस्माद् गुहान्तरात् ॥ २५९ ॥ श्रुत्वैतत्तत्क्षणात्स्वांह्रिप्रहारेण शिलां च ताम् । अपनीय बहिर्यावत्पश्यति स्म महीपतिः ॥ २६० ॥ ता-

वत्सं मरणं प्राप्तं, दृष्ट्वा भूपो दयान्वितः । प्रोवाचेति रुदन् रे रे, दंष्ट्रिन्नैयं हतः कथम् ॥ २६१॥ यतः—" वेश्यका नृपतिश्चौरनीरमार्जारदंष्ट्रिणः । जातवेदाः कलादश्च, भवन्ति निर्दया इमे ॥ १ ॥ " तदवस्थं पतिं प्रेक्ष्य, तदा सद्यः पुलिन्द्रिका। मुक्ता प्राणैर्विमोहेन, यतो मोहो हि बन्धनम् ॥ २६२ ॥ तावत्पृष्ठागतेनैव, सैन्येन नृपतिः पुरीम्। नीतो निषेधयामास, सद्यो दानं शुचार्दितः ॥ २६३ ॥ इतश्च कतिभिर्मासैः, श्रीपतेर्व्यवहारिणः । जातमात्रोऽङ्गजो वक्ति, शुक इव स्फुटाक्षरम् ॥ २६४ ॥ आकारितो नृपस्तेनारिष्टं भावीति चिन्तयन्। यावन्नायाति तावच्च, तेनैव धिक्कृतोऽधिकम् ॥ २६५ ॥ ततो भूपं समायातं, शिशुः प्राह स्फुटाक्षरम् । निषेधयसि किं दानं, दीयमानं जनैरिह ? ॥ २६६ ॥ राजा प्राह मया पूर्वं, दृष्टं दानफलं बहु । मत्वा ततो नृपस्वान्तं, बभाषे बालको द्रुतम् ॥ २६७ ॥ शृणु दानस्य माहात्म्यं, विक्रमादित्यभूपते!। कणिकाघृतदानेन, जातोऽहं श्रीपतेः सुतः ॥ २६८ ॥ पुलिन्द्रिकः सुपात्रस्य, कणिकाघृतदानतः द्वात्रिंशत्स्वर्णकोटीशसुतोऽभूवमहं ननु ॥ २६९ ॥ भूपतिस्तेन संकेतवचसा मुमुदेतराम्। एवं चेत्तस्य भार्याया, उत्पत्तिं कथयाधुना ॥ २७० ॥ बालोऽवग् नगरेऽत्रैव, दन्ताकव्यवहारिणः । सुता जाता सा च कान्ता, मम भूप ! भविष्यति ॥ २७१ ॥ यतः—" यथा धेनुसहस्रेषु वत्सो गच्छति मातरम् । तथा पुराकृतं कर्म कर्तारमनुयाति च ॥ १ ॥ " एतत्पद्मावती वक्ति, मदीयास्येऽवतीर्य च । श्रुत्वैतन्नृपतिर्दानोपकारैकपरोऽभवत् ॥ २७२ ॥ इति परोपकारे पुलिन्द्रिककथा ॥ ८ ॥

आराधयन् जनः शुद्धं, समत्त्वं भावतः खलु । इहामुत्र सुखश्रेणीं, लभते सोमभूपवत् ॥ १ ॥ जम्बूनामाऽस्ति सद्द्वीपो, लक्षयोजनविस्तृतः। समस्तद्वीपमध्यस्थो, नानादेशविराजितः ॥ २ ॥ तस्य दक्षिणदिग्भूमिभागभूपाकरं परम् । भारतं खण्डमस्तोककमलाकेलिकेतनम् ॥ ३ ॥ श्रीपुरं श्रीपुरं तत्र, समस्ति स्वस्तिमन्दिरम् । वसुधावनिताभालभूषणं सुकृतास्पदम् ॥ ४ ॥ प्रतिमगे यत्र जिनेन्द्रसद्मदन्दह्यमानागुरुधूपधू-

म्या । उच्चैर्नभोमण्डलमुल्लिखन्ती, करोति लीलां किल वारिदस्य ॥ ५ ॥ यत्र संघोऽन्वहं श्रीमज्जिनधर्मं सतां हितम् । कुर्वन् सुरनरेशानां, श्लाघास्थानमुपागमत् ॥ ६ ॥ तत्राजायत भूपालो, जितशत्रुः प्रजाहितः । यस्य भ्रूभङ्गमात्रेण, पलायाञ्चक्रिरेऽरयः ॥ ७ ॥ तस्य राज्ञी लसच्छीलभूषणा शीलवत्यभूत् । विश्वविश्वमहेलानां, दधे धुरिपदं यया ॥ ८ ॥ कुर्वाते ते दयामूलं, जिनधर्मं प्रयत्नतः । सुरासुराधिपत्यादिसातसंततिदायकम् ॥ ९ ॥ च्युत्वाऽन्यदा मरुद्देहाज्जीवः पीवरपुण्यकृत् । भाग्यैरुज्जागरैः शीलवत्या गर्भमवातरत् ॥ १० ॥ दानं ददाम्यहं शुद्धं, पूजयामि जिनेश्वरम् । कुर्वे यात्रां च तीर्थेषु, दयां च तन्वेऽखिलाङ्गिषु ॥ ११ ॥ तपः करोमि सच्छीलं, धारयामि स्वभावतः । तस्या गर्भानुभावेनाभूदित्थं दोहदो वरः ॥ १२ ॥ वृद्धिं यथा यथा याति, गर्भस्तस्या निरन्तरम् । तथा तथा स्वभावेन, सदाशा वर्धतेऽभितः ॥ १३ ॥ यो य उत्पद्यते शीलवत्याश्चेतसि दोहदः । तं तं सर्वं तदा भूपः, पूरयामास हेलया ॥ १४॥ शुक्रे मीनगते शुद्धनक्षत्रे विलसत्तिथौ । परिपूर्णे दिवसेऽसूत, सुतं शीलवती शुभम् ॥ १५ ॥ गीतनृत्यादिभिः कुर्वन्, पुत्रजन्मोत्सवं नृपः । आश्चर्यं कृतवान् स्वर्गसदामपि समन्ततः ॥ १६ ॥ नृपो भक्ताम्बुताम्बूलवस्त्रालङ्करणादिभिः । सम्मान्य स्वजनं तस्य, सोम इत्यभिधां व्यधात् ॥ १७॥ अथ रिङ्खन् क्रमाद्बालो, मन्दिराजिरभूमिषु । मातापित्रोस्तनोति स्म, हर्षोत्कर्षभरं रयात् ॥ १८ ॥ समानैर्बालकैः सार्धं, रममाणो दिवानिशम् । बालोऽप्यबालप्रकृतिर्न कदाऽप्येष जीयते ॥ १९ ॥ अवेत्य नृपतिर्लेखशालायोग्यं सुतं क्रमात् । निन्ये कुर्वन् महं लेखशालां हर्षेण पूरितः ॥ २० ॥ सदैव पण्डितोपान्ते, पठन् शास्त्राण्यनेकशः । विश्वविश्वप्रवीणेषु, धुरि धुर्यो बभूव सः ॥ २१ ॥ सच्चारित्रवतां पार्श्वे, साधूनां शुद्धचेतसाम् । प्रपठन् धर्मशास्त्राणि, बभूवाशु सुधार्मिकः ॥ २२ ॥ करे दानं मुखे सद्वाग्, देवध्यानं च चेतसि । श्रवणं धर्मशास्त्रस्य, सोमस्याजनि सन्ततम् ॥ २३ ॥ एकदा तत्र भूपीठमंहिभ्र्यां पावयन् भृशम् । आययौ बहिरुद्याने, सुधर्मा गुरुरुद्यतः ॥ २४ ॥ श्रुत्वा गुरुं समायातमुद्याने मेदिनीपतिः । सपुत्रो

मुदितो नन्तुं, चचालोंचलमानसः ॥ २५ ॥ त्रिः प्रदक्षिणयाञ्चक्रे, गुरुराजं मुदा नृपः । प्रणम्य च गुरोरग्रे, निषण्णश्च समाहितः ॥ २६ ॥
आरेभे देशनां धर्ममयीं गुरुपुरन्दरः । स्वर्गापवर्गभूमीशसातसन्ततिदायिनीम् ॥ २७ ॥ "अस्मिन् संसारकान्तारे, जरामरणभीमदे । क्षणमात्रं
सुखं नास्ति, जीवानां भ्रमतां भृशम् ॥ २८ ॥ लब्ध्वा नरभवं दुःखलभ्यं भवशतैरपि । धर्मं कुर्यान्न यो भावात्स स्याद्बालिशशेखरः ॥ २९ ॥
तत्तत्पूर्वार्जितश्रेयःपापाभ्यां सर्वदेहिनाम् । भवन्ति भूरिशः संपद्विपदो हि पदे पदे ॥ ३० ॥ त्रिःसंध्यं जिननाथस्य, कुर्वन् पूजां जनोऽ-
निशम् । चक्रिशक्रमहीनाथसातानि लभतेऽचिरात् ॥ ३१ ॥ श्रेयःसौख्यकरी भवार्णवतरी, पापव्रजोंवावरी, शक्रश्रीपतिसार्वभौमवसुधाधीशे-
भ्यलक्ष्मीकरी । चञ्चत्कीर्तिकरी निरामयकरी, सौभाग्यतेजस्करी, सच्चेतःसुखदेवरी जिनपतेः, पूजा मरुद्वल्लरी ॥ ३२ ॥ पिनष्टि पापं सुगतिं
ददाति, करोति देवावनिनाथलक्ष्मीः । सिद्धीः समग्रा ददते जिनानां, पूजा कृता भव्यतनूमतां श्राक् ॥ ३३ ॥ श्रीसम्यक्त्वप्रभावेण, जीवा
मञ्जुलमानसाः । लभन्ते स्वर्गनिर्वाणसुखसंततिमञ्जसा ॥ ३४ ॥" श्रुत्वा सोमकुमारेण, श्रीसम्यक्त्वफलं तदा । श्रीसम्यक्त्वमेलञ्चक्रे, कैवल्य-
सुखकाङ्क्षिणा ॥ ३५ ॥ केचिदाद्यं व्रतं केचिद्देशाद्द्वितीयकं पुनः । तृतीयं च चतुर्थं च, पञ्चमं केऽपि चाश्रयन् ॥ ३६ ॥ नत्वा गुरुपदौ विश्वंभ-
रेशस्तनयान्वितः । गृणन् गुरु गुणग्रामान्, निजगेहमुपागमत् ॥ ३७ ॥ अन्यदाऽवग् नृपः सोमं, कुर्वाणं धर्ममन्वहम् । तव चिन्तां विना राज्य-
कार्यं सीदति नन्दन ! ॥ ३८ ॥ सोमः प्राहेति हे तात ! विना धर्मं कदाचन । जीवा देववरक्ष्मापसुखभाजो भवन्ति न ॥ ३९ ॥ संसारा-
सारतां वक्ति, पृष्टस्ता तेन नित्यशः । अनित्यं जीवितं लक्ष्मीश्चञ्चला गजकर्णवत् ॥ ४० ॥ अथ चिन्ताकुलं सोमकुमारं वीक्ष्य भूपतिः । राज्यं
दातुमनाः शीघ्रं, सामग्री समसूत्रयत् ॥ ४१ ॥ तच्च विज्ञाय सोमोऽपि, ध्यायति स्म स्वमानसे । मम राज्यं यदि क्ष्मापो, बलेन खलु दास्यति
॥ ४२ ॥ तदा राज्यसुखासक्तचेतसो मम निश्चितम् । सर्वे मनोरथा देशालोकनाढ्या ययुः क्षयम् ॥ ४३ ॥ छलं कृत्वा निशीथिन्यां, निर-

गान्नगरात्ततः । विदेशं गन्तुकामः स,हर्षपूरितमानसः ॥ ४४ ॥ क्रममाणः क्रमाद् भूमीवलयं भीतिवर्जितः । कान्तारं दुर्गमं प्राप,नानाद्रुमविराजितम् ॥ ४५ ॥ दृष्ट्वा सरोवरं यावत्,पालिं समधिरोहति । तावद्ददर्श चाम्रं स,वरिष्ठफलपूरितम् ॥ ४६ ॥ बुभुक्षितः फलान्यत्तुं,यावच्चटति तं द्रुतम् । तावत् कश्चिच्छुको,वक्ति पीयूषाशनभाषया ॥ ४७ ॥ पान्थास्य सरसस्तीरे,विद्यते यक्षमन्दिरम् । तस्मिन् मेघाभिधो यक्षो,दुष्टस्तिष्ठति सन्ततम् ॥ ४८ ॥ तस्यानतिं विनाम्रस्य,फलान्यत्ति हि यो जनः । तस्य रुष्टो महाघोरमुपसर्गं करोति सः ॥ ४९ ॥ श्रुत्वा शुकवचः सोमश्चिन्तयामासिवानयम् । सम्यक्त्वं सुगुरोः पार्श्वे,मया पूर्वं लले मुदा ॥ ५० ॥ ततो जगौ कुमारस्तं,शुकराज ! मया पुरा । श्रीसम्यक्त्वमलश्चक्रे,सुधर्मगुरुसंनिधौ ॥ ५१ ॥ पुनः प्राह शुकस्तत्त्वं,यदि जीवितमिच्छसि । यक्षस्य प्रणतिं कृत्वा,फलान्यद्धि भयोज्झितः ॥ ५२ ॥ सोऽवग् मोहादि भीरिक्तं,देवदेवं जिनाधिपम् । मुक्त्वाऽन्यदैवतं हंहो,नौमि प्राणात्ययेऽपि न ॥ ५३ ॥ कीरः स्वं रूपमुत्सृज्य,सुररूपं प्रपद्य च । अवक् चलत् झलत्कारतारमाणिक्यकुण्डलः ॥ ५४ ॥ सुरोऽवग् वाचमानन्दमेदुरस्तारहारभृत् । त्वत्साहसेन तुष्टोऽस्मि,वरं मार्गय वाञ्छितम् ॥ ५५ ॥ नृपपुत्रः सुरं प्राह,न मे कार्यं धनादिना । तस्मै बलेन गीर्वाणो,रत्नद्वयमदात्तदा ॥ ५६ ॥ मनश्चिन्तितमेकेन,प्रसिद्ध्यत्यपरेण च । राज्यं भवेदिति तयोः,प्रभावमवदत् सुरः ॥ ५७ ॥ आराधनाविधिं तस्मै,दत्त्वा देवस्तिरोऽभवत् । सोमो मार्गश्रमं स्नात्वाऽपनेष्ट सरसोऽम्भसा ॥ ५८ ॥ आदायाम्रफलान्याशु,जग्ध्वा तृप्तिं च सोऽगमत् । ततस्तस्य तरोश्छायामायाति स्म विशिष्टधीः ॥ ५९ ॥ तस्मिन्नाम्रतरौ रात्रौ,स्थित्वा सुस्थितचेतसा । स्मरन् पञ्चनमस्कारमुद्गतेऽर्केऽचलत्ततः ॥ ६० ॥ क्रामन् सुखेन भूपीठं,प्रपश्यन्नगराकरान् । लक्ष्मीपुरसमीपेऽगात्सोमः सोमसमाननः ॥ ६१ ॥ अभ्रंलिहानि चैत्यानि,बहूनिभ्यालयानपि । पुरीं पश्यन् पदे पदे,करोतीत्थं स्वमानसे ॥ ६२ ॥ किं लङ्का ? किमु कौशाम्बी ? किं चम्पा ? किमु देवपूः ? । किं हास्तिनपुरं ? किं वा,कौशला ? किं च

मालिनी ? ॥ ६३ ॥ युग्मम् ॥ लङ्केव पुण्यजनभूमिरभङ्गभोगा, भोगावतीव धनदा कलितालिकावत् । रम्या सुपर्वविशदैरमरावती वाऽयोध्येव या ललितलक्ष्मणहृद्यरामा ॥ ६४ ॥ विलोकयन् पुरं सोमः, स्थाने स्थाने मनोरमम् । जगाम पण्ययोषाया, अक्काया मन्दिरं क्रमात् ॥ ॥ ६५ ॥ ततो रत्याह्वया तस्याः, सुतया संगतस्तदा । सुखेन नयते कालं, पौलोम्येव सुरेश्वरः ॥ ६६ ॥ सोमः सुखेन तद्गेहे, ह्यौरराध मणी रहः । तदधिष्ठायकौ देवौ, तुष्टौ तस्य बभूवतुः ॥ ६७ ॥ अक्का यद्यदयाचिष्ट, लोभेन ग्रस्तमानसा । आराध्य सुमणिं तत्तदर्पयामास स द्रुतम् ॥ ६८ ॥ मायां कृत्वैकदाऽप्यक्का, लक्षकोटिं च याचते । स च रत्नं समाराध्य, लक्षं कोटिं स्म यच्छति ॥ ६९ ॥ उपार्जयति नो किञ्चिदयं द्रव्यं कदाचन । मार्ग्यते यच्च तत्सर्वं, दत्ते स्मैष कथं मम ? ॥ ७० ॥ छलं मायाविनी कृत्वा, तस्यैकं रत्नमग्रहीत् । कुमार एकदा रत्नद्वयं च संन्यभालयत् ॥ ७१ ॥ मणिमेकं दृषत्खण्डमेकं चालोक्य राजसूः । चिन्तयामासिवानित्थं, स्वमनोऽन्तर्मुहुर्मुहुः ॥ ७२ ॥ लात्वा मम मणिं केन, वद्धं पाषाणखण्डकम् ? । समायाति न कोऽप्यत्र, परं संप्रति मां विना ॥ ७३ ॥ रतिमात्राऽनया नूनं, मायाविन्या मणिर्मम । छलेनाङ्गीकृतस्तच्च, निश्चिनोमि कथं ननु ? ॥ ७४ ॥ रत्यम्बां वक्ति सोमस्तु, मम रत्नं गृहीतवान् । कश्चन च्छलतोऽत्रैव, पृच्छयतां स्वपरिच्छदः ॥ ७५ ॥ रतिमाता तदा प्राह, चौर्यं मम गृहे न हि । ततो वक्ति कुमारोऽसौ, कुतो रत्नं गतं मम ? ॥ ७६ ॥ रत्नं त्वया गृहीतं मे, छलं कृत्वेति मे मनः । तेनेत्युक्ते कठोरेण, सोऽक्कायेति च हक्कितः ॥ ७७ ॥ रेरे त्वं मूर्खशिरोरत्न ! कलङ्कयसि मत्कुलम् । ततो निर्गच्छ मद्गेहाच्चो चेदेवं विगोप्यसे ॥ ७८ ॥ ततश्च मौनमाधाय, सोमश्चिन्तितवानिति । एकं चिन्तितदानैकदक्षं रत्नं समस्ति मे ॥ ७९ ॥ मणिदैवतमाराध्य, कुर्वेऽहं रासभीं रतिम् । चिन्तयित्वा मणेर्देवं, सारराध सनिर्णयः ॥ ८० ॥ प्रत्यक्षीभूय रत्नाधिष्ठायको निर्जरोऽवदत् । किमु कार्यं मया सोम ! तव संप्रति विद्यते ? ॥ ८१ ॥ सोमो जल्पति गीर्वाण ! मायाविन्याऽक्कयाऽनया । जगृहे मे मणिस्तेन, तत्सुतां कुरु रासभीम् ॥ ८२ ॥ देवशक्त्या

॥ ८३ ॥ निश्चित्य चेष्टितं तस्य,रुदती करुणस्वरम् । ताड-
रतिर्जाता रासभी क्षणतस्तदा । अवेक्ष्य स्वसुतां तादृग्रूपां दुःखयुताऽजनि ॥ ८३ ॥ निश्चित्य चेष्टितं तस्य,रुदती करुणस्वरम् । ताड-
यन्ती भृशं वक्षो,जितारेः सविधं गता ॥ ८४ ॥ राजा जगौ किमर्थं त्वमागता ब्रूहि संप्रति । रोदनं कुर्वती वक्षस्ताडयन्ती जजल्प सा ॥
८५ ॥ धूर्तो मम गृहे कश्चिदागत्य संस्थितः पुरात् । दत्त्वा कलङ्कमेकं मे,रासभीं मत्सुतां व्यधात् ॥ ८६ ॥ तेनाहं मुषिता स्वामिन्! त्वयि
नाथे सति ध्रुवम् । भ्रुकुटीं भूपतिः कृत्वा,तमाकारयते भटैः ॥ ८७ ॥ आगत्याथ महीनाथसमीपं क्षणतस्तदा । मणिं स्मृत्वा धराधीशं,वशी-
चक्रे स कौतुकी ॥ ८८ ॥ नृपो जगौ किमेतस्यास्तनया रासभी कृता?। जजल्प प्राञ्जलीभूय,सोमो भूमीपतिं प्रति ॥ ८९ ॥ ममानया मणि-
श्छद्म,कृत्वा जह्रे नरेशितः!। ततो जजल्प भूपालो,विधाय भ्रुकुटीं भृशम् ॥ ९० ॥ छद्म कृत्वा त्वया रत्नं,किमस्य जगृहेऽधुना । मणिं यद्यस्य
नो दत्से,ततस्त्वं हि विगुप्यसि ॥ ९१ ॥ युग्मम् ॥ यद्यस्ति सुतया कार्यं,मङ्गलेन च सांप्रतम् । अस्मै दत्त्वा मणिं शीघ्रं,सुखिनी भव सर्वदा
॥ ९२ ॥ साऽऽनीय बीभ्यती रत्नं,दत्त्वा सोमाय तत्क्षणात् । सुतां च वनितामाशु,कारयित्वा गृहेऽगमत् ॥ ९३ ॥ सोमभूपालयोः प्रीतिः
र्जाताऽर्काम्बुजयोरिव । सुखेन मणिमादाय,सोमोऽस्थान्नृपसंनिधौ ॥ ९४ ॥ एकदा नृपतेः पुत्रो ग्रस्तः शूलरुजा खलु । दाहज्वरेण च व्याप्तो
बभूवामरनामकः ॥ ९५ ॥ भूप आकारयामास,भटैर्भूरिचिकित्सकान् । आगत्य त्वरया वैद्याश्चिकित्सन्ति तमन्वहम् ॥ ९६ ॥ चिकि-
त्सतां तदा तेषां,बभूव न गुणो मनाग् । मुहुर्महीपतेः सूनोर्वेदना ववृधेऽधिकम् ॥ ९७ ॥ मुक्तो धात्रीपतेः सूनुर्भिषग्भिः सकलैरपि । आ-
क्रन्दं कुरुते स्मालं,तेन रोगेण पीडितः ॥ ९८ ॥ शोकाकुलस्ततो भूपश्चिन्तयामास चेतसि । अस्ति कदाऽपि कस्यापि,मणिः शूल्यादिरो-
गहृत् ॥ ९९ ॥ यः स्फेटयति मत्सूनोः,शूलरोगव्यथां जनः । दास्येऽहं तस्य राज्यार्धं,सुतां च सुरसुन्दरीम् ॥ १०० ॥ विचार्येति तदा
[illegible] सार्धं महीपतिः । पटहं वादयामास,पुरिमध्येऽभितोऽनुगैः ॥ १०१ ॥ तदेति राजपटहं, वाद्यमानं नृपाध्वनि । आगत्य त्वरितं

सोमः परस्पर्श पटहं मुदा ॥ १०२ ॥ सोमोऽप्येत्य नृपोपान्ते मणिमाराध्य वेगतः । तदम्भसा महीजानिसुतं रुग्रहितं व्यधात् ॥ १०३ ॥ तदा भूपगृहं जज्ञे तूर्यमङ्गलमण्डितम् । भूपचित्तमभून्मोदभरपूर्णं समाधिना ॥ १०४ ॥ शुभे लग्ने शुभे घस्रे सुवेलायां सदुत्सवैः । ददौ स्वतनयां सोमकुमाराय महीपतिः ॥ १०५ ॥ राज्यार्धं भूरिमातङ्गतुरगादिविराजितम् । दत्वा तस्मै कुमाराय राज्यार्धं कुरुते नृपः ॥ १०६ ॥ जिनालयान् बहून् मह्यां कैलासाचलसोदरान् । कारयामास भूपश्च धर्मस्थानान्यनेकशः ॥ १०७ ॥ आराधनाविधिं सम्यक्कृत्वा सुगुरुसंनिधौ । ध्यायन् पञ्चनमस्कारान् जितारिः स्वर्गभाग्भूत् ॥ १०८ ॥ तत्पुत्रोऽमरभूमीशो भुङ्क्ते भूमिं समाहितः । सोमसाहाय्यतः कुर्वन् जैनेन्द्रं धर्ममुत्तमम् ॥ १०९ ॥ अन्यदा बहिरुद्याने सुधर्मं गुरुमागतम् । श्रुत्वा सोममहीजानिरमरेण समं तदा ॥ ११० ॥ वन्दितुं चलितः सोम मन्दिरात्सपरिच्छदः । प्रमोदपूरितस्वान्तः श्रोतुं सद्धर्मदेशनाम् ॥ १११ ॥ युग्मम् ॥ सुधर्मगुरुमानम्य स्तुवन् गुणगणान् गुणी । उपविष्टोऽग्रतः श्रोतुं धर्मं संसारतारकम् ॥ ११२ ॥ वाचा मधुरया धर्मयुक्तया गुरुपुङ्गवः । दत्ते स्म सदयो धर्मदेशनां सुन्दरामिति ॥ ११३ ॥ अर्हद्धर्मतरोः फलानि सुकुले जन्मानघं जीवितम्, सुश्रीबुद्धिबले प्रतापयशसी, सौभाग्यमारोग्ययुक् । क्ष्माभृत्केशव चक्रिशक्रशशभृत्खद्योतनानां पदं, सार्वश्रीगणभृत्पदं शिवरमा सल्लब्धयो देहिनाम् ॥ ११४ ॥ सोमामरमहीनाथौ श्रुत्वेत्थं धर्मदेशनाम् । शुद्धधर्मं जिनेन्द्रोक्तं ललतुर्मुदिताशयौ ॥ ११५ ॥ अन्येऽपि बहवो भव्यजना धर्मं ललुः पुनः । गुरुं नत्वा निजावासं जग्मतुस्तौ गुणान्वितौ ॥ ११६ ॥ अन्यदाऽमरभूनाथो मन्दिरस्योपरिस्थितः । ददर्श गगनं यावत्प्रसरन्तं घनाघनम् ॥ ११७ ॥ तावच्चण्डतरो वात उत्पाटयन् दिशो दिशम् । प्राकारपादपागारप्रासादानायया द्रुतम् ॥ ११८ ॥ युग्मम् ॥ तत्क्षणात्तेन वातेनाभ्रमणं कुर्वताऽभितः । विस्तृतो वारिदो नीतो विनाशमर्कतूलवत् ॥ ११९ ॥ दृष्ट्वा तत्सकलं तत्रामरक्षोणीपतिस्तदा । अनित्यतां निजस्वान्ते भावयामास भावतः ॥ १२० ॥ संध्यारागतडित्तुल्यं जीवितं खलु देहिनाम् ।

नदीकल्लोलचपला, कमला सकला किल ॥ १२१ ॥ अनित्यं सकलं वस्तु चिन्तयन्नमरस्तदा । दत्त्वा सोममहीशाय, स्वं राज्यं सकलं बलात् ॥
१२२ ॥ सप्तक्षेत्र्यां धनं शेषमुप्त्वा कृत्वा जिनार्चनाम् । व्रतं जग्राह शुद्धात्मा, महोत्सवपुरस्सरम् ॥ १२३ ॥ युग्मम् ॥ कुर्वन्नुपकृतिं विश्व-
जनाय भणितः खलु । प्रजाः स पालयामास, न्यायमार्गं प्रवर्तयन् ॥ १२४ ॥ जिनार्चामिष्टया कुर्वन् त्रिःसंध्यं कुसुमादिभिः । कालं गमयत्यर्हताय,
क्षणवत्सोमभूपतिः ॥ १२५ ॥ स्मृतपञ्चनमस्कारा, प्रसुप्ता सुरसुन्दरी । ददर्श वृषभं स्वप्ने, ध्वनन्तं धवलं तदा ॥ १२६ ॥ गतनिद्राऽथ ज-
गतीनाथस्यान्तिकमागता । कथयामास तत्स्वप्नवृत्तान्तं भूभुजेऽखिलम् ॥ १२७ ॥ ततो जगौ महीजानिः, स्वप्नज्ञानविशारदः । तव पुत्रोऽनघो
भावी, संपूर्णे दिवसे सति ॥ १२८ ॥ श्रुत्वा तद्वचनं श्रेष्ठं, निस्तन्द्रा मुदिता तदा । नमस्कारं स्मरन्ती सा, गमयामास यामिनीम् ॥ १२९ ॥
प्रपूर्णदोहदा पूर्णमासा सुस्थितमानसा । शुभे लग्ने सुखेनैव, सुषुवे नन्दनं च सा ॥ १३० ॥ सन्मान्य सकलं राजवर्गं सद्भोजनादिना । महीनाथो
ददौ तस्मै सिंह इत्यभिधां तदा ॥ १३१ ॥ शुभे लग्ने शुभे घस्रे, पित्राऽथ लसदुत्सवम् । संप्राप्तयौवनः सिंहकुमारः परिणायितः ॥ १३२ ॥
श्रीजितशत्रुणा श्रुत्वा, लब्धराज्योऽङ्गजोऽन्यदा । सोम आकारितः पुंभिराप्तैर्मिलनहेतवे ॥ १३३ ॥ मुक्त्वा तत्र निजं मित्रं धर्मिष्ठं सचिवं
पुनः । स्मरन् पितृगुणान् सोमो, लक्ष्मीपुरमुपागमत् ॥ १३४ ॥ जितशत्रुमहीशेन, गाढं संमानितोऽङ्गजः । पश्चाद्गन्तुं यथा नैव, सोमभूपः
समीहति ॥ १३५ ॥ अथ तस्मै कुमाराय, दत्त्वा राज्यं बलादपि । जितशत्रुर्गुरोः पार्श्वे, प्रव्रज्यां जगृहे मुदा ॥ १३६ ॥ प्रत्यहं जिनधर्माधि-
वासितः सोमभूपतिः । त्रिःसंध्यं कुरुते पुष्पादिभिः पूजनमर्हतः ॥ १३७ ॥ स्थाने स्थाने जिनेन्द्राणां, प्रासादा भूरिशः पराः । कैलास-
गिरिसंकाशाः, कारिता मेदिनीभुजा ॥ १३८ ॥ अमारिपटहं भूपो, देशे स्वस्मिन्नवादयत् । ददद्दानं सुपात्रेभ्यो, ध्यायन्नित्यं जिनेश्वरम् ॥
१३९ ॥ मेलयित्वा घनं संघं, तीर्थयात्रामनेकशः । कारं कारं सदा धर्मं शिवदं कुरुते स्म सः ॥ १४० ॥ सुधर्मगुरुरन्येद्युर्बोधयन् वसुधातलम् ।

लक्ष्मीपुरं रमाकेलिसदनं समुपागमत् ॥ १४१॥ तदीयसंनिधौ धर्मदेशनां सोमभूपतिः। श्रुत्वाऽगमन्निजावासं, विशिष्टभावनान्वितः ॥ १४२॥ दत्त्वा राज्यधुरं सिंहकुमाराय नयात्मने । दीक्षामङ्गीकरोति स्म, संसारार्णवतारिकाम् ॥ १४३ ॥ षष्ठाष्टमचतुर्थादितपस्करणतत्परः । प्राप्तसूरिपदो भव्यबोधाय विजहार सः ॥ १४४ ॥ निर्दोषो निष्कलङ्कश्च, भ्रान्तिरिक्तोऽजडाशयः । ध्वस्ताशेषतमस्तोमोऽपूर्वो विधुरयं गुरुः ॥ १४५ ॥ अथ संपूर्णमायुः सो, भुङ्क्त्वा त्यक्ताम्बुभोजनः । शुक्लध्यानदृढज्वानुदग्धकर्मेन्धनव्रजः ॥ १४६ ॥ संप्राप्तकेवलज्ञानप्रबोधितजगज्जनः । सुरेन्द्रसन्नतः सोमऋषिर्मुक्तिपुरीं ययौ ॥ १४७ ॥ सम्यक्त्वविषये सोममहीपतिकथामिमाम् । श्रुत्वा भो मनुजाः! सम्यक्, सम्यक्त्वं धरतानिशम् ॥ १४८ ॥ इति श्रीसोमराजर्षिकथा समाप्ता ॥ ९ ॥

देशनानन्तरं पद्मश्रिया शुभाशया लले । दीक्षा संसारपाथोध्युत्तारणे तरणीनिभा ॥ १४९ ॥ सम्यक्त्वं जिनदासेन, जगृहे गृहमेधिना । अन्यैरपि जनैः कैश्चिज्जिनधर्मः प्रपेदिरे ॥ १५० ॥ पुण्यधनं मुनिं नत्वा, जिनदासावनीपतिः । जगाम मन्दिरं संघलोकोऽपि धर्मवासितः ॥ १५१ ॥ महोत्सवं विधायोच्चैर्निर्जरा भक्तिभासुराः । नन्दीश्वरे जिनेन्द्रांश्च, नत्वा स्तुत्वा ययुर्दिवम् ॥ १५२ ॥ पद्मश्रीरपि सौभाग्यसुन्दरीं संयतीं श्रिता ॥ षष्ठाष्टमादि सततं, चकार धर्मरङ्गतः ॥ १५३ ॥ भव्यलोकोपकाराय, ज्ञानी पुण्यधनस्तदा । विहारं चक्रवान् पृथ्वीं, पावयन्नंह्रिरेणुभिः ॥ १५४ ॥ विहारं भूरिदेशेषु, कृत्वा पुण्यधनो मुनिः । श्रीमन्दिरपुरोपान्ते, समागात्सपरिच्छदः ॥ १५५ ॥ उद्यानपालकात् श्रुत्वा, समायातं मुनीश्वरम् । वैरिसिंहोऽवनीपालो, विवन्दिषुरभूत्तदा ॥ १५६ ॥ वैरिसिंहो गजारूढो, मणिकेतुसुतान्वितः । आययौ वन्दितुं पुण्यधनं केवलिपुङ्गवम् ॥ १५७ ॥ प्रदक्षिणात्रयं कृत्वा, नत्वा च मुनिनायकम् । उपविष्टोऽग्रतः श्रोतुमुपदेशं गुरोर्मुखात् ॥ १५८ ॥ जिनदासोऽपि भूपालो, वन्दितुं पितरं मुनिम् । आजगाम द्रुतं धर्मदेशनां श्रवणेच्छया ॥ १५९ ॥ यथास्थानं तयोर्भूमिनाथयोरुप-

विष्टयोः । मुनिना च समारेभे देशना शिवशर्मदा ॥ १६० ॥ बुद्धिर्बलं श्रीः सुभगत्वमीशता, यशः प्रतापावनघं कुलं कला । अखण्डमायुः
प्रचुरं धनं पुन-र्धर्मप्रसत्तेर्भविनां भवन्त्यमी ॥ १६१ ॥ सकलाऽपि कलावतां कला, विकला पुण्यकलां विना कला । सकलावयवा वृथा यथा,
तनुभाजामकनीनिकं वपुः ॥ १६२ ॥ दशा हि तीर्थव्ययदान भोगक्षयात्मिका स्युर्द्रविणे चतस्रः । श्रद्धालुभिस्तत्र चतुर्दशादौ, स्वराः कृता-
र्थीक्रियते स्मलोके ? ॥ १ ॥ जन्मरोगजराशोककल्लोलकल्लोलसंकुलः । कषायाचलदुर्ग्राहः, संसारः सागरायते ॥ १६३ ॥ संसार-
सागरोत्तारसमर्थः पोतसन्निभः । धर्मस्तीर्थङ्करप्रोक्तः, स्वर्गमुक्तिसुखप्रदः ॥ १६४ ॥ प्राप्यते जैनधर्मेण, भव्यैर्मुक्तिपुरी स्यात् । निश्छिद्रया-
नपात्रेण, वारिराशितटीमिव ॥ १६५ ॥ सर्वज्ञैर्गदितो धर्मो, द्विधा मुक्तिसुखप्रदः । आदिमः साधुधर्मोऽस्ति, श्राद्धधर्मोऽपरः पुनः ॥ १६६ ॥
अल्पेनानेहसाऽऽद्येन, द्वितीयेन च भूरिणा । प्राप्नुवन्त्यङ्गिनो मुक्तिमृजुवक्राध्ववत् पुनः ॥ १६७ ॥ नानादुःखमयं सौख्यात्मकं संसारम-
ङ्गिनः । मन्यमाना लभन्ते द्राग्, दुःखं श्रेष्ठिवधूरिव ॥ १६८ ॥

तथाहि विद्यते भूमिमण्डनं श्रीधरं पुरम् । तत्रासीद् गुणसाराह्वः श्रेष्ठी बुद्धिधनो धनी ॥ १६९ ॥ तस्यासन् बहवः पुत्रा, रूपला-
वण्यसद्गुणाः । महेभ्यतनयाः सर्वे, पित्राऽथ परिणायिताः ॥ १७० ॥ एकदा श्रेष्ठिनाऽऽचष्ट, वधूटी स्थविरात् त्विति । लोष्टिकाममुकां देहि,
भङ्क्तुं पूगीफलं मम ॥ १७१ ॥ भूरिभारामिमां तात ! शक्तोत्पाटयितुं न हि । गुणसारस्ततो मौनं, कृत्वा चिन्तितवानिति ॥ १७२ ॥
यतः—“ बालसखित्वमकारणहास्यं, स्त्रीषु विवादमसज्जनसेवा । गर्दभयानमसंस्कृतवाणी, षड्भिर्नरो लघुतामुपयाति ॥ १ ॥ अग्निरापः
स्त्रियो मूर्खः, सर्पो राजकुलानि च । यत्नेन परिसेव्यानि, सद्यः प्राणहराणि षट् ॥ २ ॥” यथा तथा प्रपञ्चेन, वधूटीं सुकुमालिकाम् ।
वाहयामि दिनं सर्वमहं च लोष्टिकामिमाम् ॥ १७३ ॥ छन्नीकृत्य कियत्कालं, लोष्टिकां तां प्रयत्नतः । मण्डयामास श्रीसंघवात्सल्यं

श्रेष्ठिराड् महत् ॥ १७४ ॥ स्थगयित्वा सुवर्णेन, लोष्टिकां तां तथाविधाम् । हारमध्ये विधायाथ, श्रेष्ठिराड् गृहमीययौ ॥ १७५ ॥ आकार्याथ स्नुषाः सर्वाः श्रेष्ठी प्राहेति सामतः । याऽमुं हारं गले कृत्य, सायं यावद्वधूटीका ॥ १७६ ॥ श्रीसंघस्यादराद्भक्तिं, कुरुते परिवेषणात् । तस्यै हारममुं दत्त्वा, मुख्यं गेहे करोम्यहम् ॥ १७७ ॥ युग्मम् ॥ सैवाह तात ! युष्माकं, वाक्यं सर्वं करोम्यहम् । अमण्डयत्ततः श्रेष्ठी, संघवात्सल्यमद्भुतम् ॥ १७८ ॥ संध्या यावदखिन्नात्मा, तं हारं दधती गले । श्रीसंघाय तदा परिवेषयामास रङ्गतः ॥ १७९ ॥ पश्चिमप्रहरे वीक्ष्य, श्रेष्ठ्याहेति वधूं प्रति । वधूटिके ! कथं भारममुं वहसि वक्षसि ? ॥ १८० ॥ साऽऽह तात ! मनाग् नास्ति, भारो हारान्ममाधुना । श्रेष्ठि दध्यावियं जातेदृक्षा लोभाद्वधूः स्फुटम् ॥ १८१ ॥ प्रकटीकृत्य तां श्रेष्ठी वधूटीं प्राह शिष्टधीः । भारेत्यास्थ कथं पूर्वं ? निर्भारेत्यधुना कथम् ? ॥ १८२ ॥ वधूटीनां च सर्वासां, दत्त्वा भूरिधनं तदा । सैव दासी कृता श्रेष्ठिपुङ्गवेन च धीमता ॥ १८३ ॥ हस्त्यश्वसुपतिस्त्री (क) रत्नस्वर्णादिभिः सदा । लोष्टिकावद्बहिर्भाति, संसारस्थितिरङ्गिनाम् ॥ १८४ ॥ भवं भूरिमहादुःखमयं स्वल्पसुखावृतम् । मत्वा त्यक्त्वा जना धर्मं जिनोक्तं कुरुतादरात् ॥ १८५ ॥ सम्यक्त्वं वेरिसिंहेन, मणिकेतुसुतेन च । प्रपेदे शुद्धभावेन, महोत्सवपुरस्सरम् ॥ १८६ ॥ जिनदासस्तदेत्याह, पद्मश्रीः क्व च विद्यते । उक्ता पुण्यधनेनेत्थं, गतिः पद्मश्रियास्तदा ॥ १८७ ॥ आराध्य विधिवद्दीक्षां, तप्त्वा तीव्रं तपस्ततः । हरिवर्षाभिधे क्षेत्रे, युगलिन्यभवत् शुभा ॥ १८८ ॥ तस्मिंश्चित्तेप्सितं सर्वं, दशधा कल्पपादपाः । ददन्ते सततं चिन्तामणिकल्पलता इव ॥ १८९ ॥ यतः—"मत्तंगया य १ भिंगा य २ तुडिअंगा ३ दीव ४ जोइ ५ चित्तंगा ६ । चित्तरसा ७ मणिअंगा ८ गेहागारा ९ अणिग्गा य १० ॥ १ ॥ मत्तंगएसु मज्जं १ सुहपेज्जं भायणाणि भिंगेसु २ । तुडिअंगेसु अ तुडिआइं ३ हवंति बहुप्पगाराइं ॥ २ ॥ दीवसिहा ४ जोइसिअनामगा एए करंति उज्जोअं ५ । चित्तंगेसु अ मल्लं ६ चित्तरसा भोअणट्ठाए ॥ ३ ॥ मणिअंगेसु अ भूसणवराइं ८ भवणाणि भवणरुक्खेसु

९ । तह अणिगेसु अ भणिअं वत्थाइं बहुप्पगाराइं ॥ ४ ॥ आयुः क्षये ततो मृत्वैशाने देवी भविष्यति। ततश्च्युत्वा महानन्दपुरे सुरनरेशितुः ॥
१९० ॥ पत्नी भूत्वा तपस्तप्त्वा, कृत्वा कर्मक्षयं पुनः । उत्पन्नकेवलज्ञानान्मुक्तिपुर्यां गमिष्यति ॥ १९१ ॥ युग्मम् ॥ मातुर्मुक्तिगतिं श्रुत्वा
नत्वा पुण्यधनं मुनिम् । जिनदासोऽगमत् पूर्यां, वैरिसिंहनृपोऽपि च ॥ १९२ ॥ ततः प्रबोध्य सततं भूरिशो भविनो भुवि। मुक्ति
पुरीमलञ्चक्रे, ज्ञानी पुण्यधनो मुनिः ॥ १९३ ॥ श्रुत्वा कथां पुण्यधनस्य राज्ञः, स्वर्गापवर्गादिसुखप्रदात्रीम् । जिनेन्द्रपूजां कुरुताष्टधाऽलं हे
भव्यलोकाः! कुसुमादिभिश्च ॥ १९४ ॥ शुभभव्यशीतलतादिमवर्णजनाम भवति यस्य यतेः। षट्नवमनु १४९६ काल, इयं पुण्यधनकथा
कृता तेन ॥ १९५ ॥

॥ इति पुण्यप्रभावोपरि श्रीपुण्यधननृपकथा समाप्ता ॥

समाप्ता चेयं पुण्यधननृपकथा ।

॥ ३२॥